७।३।५७॥ जयतेः सन्लिण्णिमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात्। जिगाय जिग्यतुः जिग्युः। जिगयिथ-जिगेथ। जिगाय-जिगय जिग्यिव जिग्यिम। जेता। जीयात्। अजैषीत्। जीव ५६२ प्राणधारणे। जिजीव। पीव ५६३ मीव ५६४ तीव ५६५ णीव ५६६ स्थौल्ये। पिपीव। मिमीव। तितीव। निनीव। क्षीवु ५६७ क्षेवु ५६८ निरसने। उर्वी ५६९ तुर्वी ५७० थुर्वी ५७१ दुर्वी ५७२ धुर्वी ५७३ हिंसार्थाः। ऊर्वांचकार। 'उपधायां च' (सू २२६५) इति दीर्घः। तुतूर्व। गुर्वी ५७४ उद्यमने। गूर्वति। जुगूर्व। मुर्वी ५७५ बन्धने। पुर्व ५७६ पर्व ५७७ मर्व ५७८ पूरणे। चर्व ५७९ अदने। भर्व ५८० हिंसायाम्। कर्व ५८१ खर्व ५८२ गर्व ५८३ दर्पे। अर्व ५८४ शर्व ५८५ षर्व ५८६ हिंसायाम्। आनर्व। शर्वति। सर्वति। इवि ५८७ व्याप्तौ। इन्वति। इन्वांचकार। पिवि ५८८ मिवि ५८९ णिवि ५९० सेचने। तृतीयो मूर्धन्योष्मादिरित्येके। सेवने इति तरङ्गिण्याम्। पिन्वति। पिपिन्व। हिवि ५९१ दिवि ५९२ धिवि ५९३ जिवि ५९४ प्रीणनार्थाः। हिन्वति। दिन्वति।

(२३३२) धिन्विकृण्व्योर च।३।१।८०॥ अनयोरकारोऽन्तादेशः स्यादु-प्रत्ययश्च शब्विषये। 'अतो लोपः' (सू २३०८) तस्य स्थानिवद्भावाल्लघूप-

---

निमित्तसप्तमी अभ्यासे अन्वेति। तदाह—**सन्लिण्णिमित्तो योऽभ्यास इत्यादि**। सनि लिटि च अभ्यासात् परस्य कुत्वमिति व्याख्याने तु यङ्लुगन्तात् सनि जेजयिषति इत्यत्र कुत्वं स्यात्। अतः सन्लिण्णिमित्तो योऽभ्यास इति व्याख्येयमिति माधवः। **जिगायेति**। णलि द्वित्वे वृद्धौ उत्तरखण्डे जस्य कुत्वेन गः। **जिग्यतुरिति**। कित्त्वाद्गुणाभावः लिटि एकाच इति इण्णिषेधं बाधित्वा क्रादिनियमादिटि प्राप्ते, थलि 'अचस्तास्वत्' इति तन्निषेधस्य भारद्वाजनियमाद्विकल्पः। तदाह—**जिगयिथ जिगेथेति**। जिग्यथुः। जिग्य। 'णलुत्तमो वा' इति मत्वा आह—**जिगाय जिगयेति**। क्रादिनियमादिटं मत्वा आह—**जिग्यिव जिग्यिमेति**। **जेतेति**। जेष्यति। जयतु। अजयत्। आशीर्लिङि 'अकृत्सार्वधातुकयोः' इति दीर्घं मत्वा आह—**जीयादिति**। **अजैषीदिति**। 'सिचि वृद्धिः' इति वृद्धिरिति भावः। अजेष्यत्। षर्वधातुः षोपदेशः। इविधातोरिदित्त्वान्नुम्। तदाह—**इन्वतीति**। **इन्वांचकारेति**। नुमि इजादिगुरुमत्त्वादामिति भावः। पिविमिवीत्यादय इदितः।

**धिन्विकृण्व्योः**। अ इति लुप्तप्रथमाकम्। धिविकृव्योः कृतनुमोः धिन्विकृण्वीति निर्देशः। 'तनादिकृञ्भ्य उः' इत्यतः उरिति चकारादनुकृष्यते। 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुक इति च। तदाह-

धगुणो न। उप्रत्ययस्य पित्सु गुणः। धिनोति[1] धिनुतः धिन्वन्ति। (२३३३) **लोपश्चास्यान्यतरस्यां म्वोः।६।४।१०७॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः। धिन्वः-धिनुवः धिन्मः-धिनुमः। मिपि तु परत्वाद्गुणः। धिनोमि। (२३३४) **उतश्च प्रत्ययादसंयोगपूर्वात्।६।४।१०६॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक्स्यात्। धिनु। नित्यत्वादुकारलोपात्पूर्वमाट्। धिनवाव धिनवाम।

---

**अनयोरित्यादिना**। वकारस्याकारः धिन् अ उ ति इति स्थितम्। **अतो लोप इति**। युगपत्संनियोगशिष्टतया उप्रत्ययाकारयोर्विधानेऽपि श्रुतक्रमानुरोधेन प्रवृत्त्या आर्धधातुकोपदेशकाले धिन इत्यस्यादन्तत्वमिति भावः। नन्वत्र वकारस्य लोप एव विधीयतां किमकारविधिनेत्यत आह—**तस्येति**। वकारस्य लोपविधौ तु अजादेशत्वाभावात् स्थानिवत्त्वं न स्यादिति भावः। तथा च धिनु ति इति स्थिते आह—**उप्रत्ययस्येति। धिनुत इति**। धिविधातोर्नुमि तसि उप्रत्यये वकारस्य अकारादेशे अतो लोपे तसो ङित्त्वादुकारस्य न गुणः। **धिन्वन्तीति**। धिन्व इत्यस्मात् झिः। झोऽन्तः। उप्रत्ययः। वकारस्य अकारः। अतो लोपः। उकारस्य यणिति भावः। अत्र वकारस्य स्थानिवत्त्वेन आर्धधातुकत्वेऽपि नेट्। उकारवृत्त्यार्धधातुकत्वस्य अल्धर्मत्वेन अनल्विधाविति निषेधात्। तदिदं भोभगो इति सूत्रभाष्ये स्पष्टम्। धिनोषि धिनुथः धिनुथ। धिनोमि।

**लोपश्च**। 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पूर्वसूत्रोक्त उकारः अस्येत्यनेन परामृश्यते। प्रत्ययशब्दः प्रत्ययसंबन्धिनि वर्तते। असंयोगपूर्वात् प्रत्ययादिति च उकारे अन्वेति। स च अङ्गस्य विशेषणम्। तदन्तविधिः। तदाह—**असंयोगेति। प्रत्ययोकार इति**। प्रत्ययसंबन्धी उकार इत्यर्थः। प्रत्यय उकार इति व्याख्याने तु सुनुवः सुनुमः इत्यत्र न स्यात्, तत्र श्नोरेव प्रत्ययत्वात्। प्रत्ययेति किम्। युवः। युमः। असंयोगपूर्वादिति किम् शक्नुवः शक्नुमः। **धिन्वः धिनुवः इति**। अत्र उप्रत्ययस्य उकारान्तत्वं व्यपदेशिवत्त्वेन बोध्यम्। नन्वेवं धिनोमीत्यत्र मिपि धिनु मि इति स्थिते उकारस्य लोपः स्यादित्यत आह—**मिपि त्विति**। दिधिन्व। धिन्विता। धिन्विष्यति। धिनोतु। **उतश्च। हेर्लुक्स्यादिति**। चिणो लुगित्यतः अतो हेरित्यतश्च तदनुवृत्तेरिति भावः। लोटो मिपि उप्रत्यये वकारस्य अकारे अतो लोपे धिनु मि इति स्थिते मेर्निभावं आडुत्तमस्येत्याडागमं च बाधित्वा परत्वादुकारस्य 'लोपश्चास्यान्यतरस्याम्' इति लोपमाशङ्क्याह—**नित्यत्वादुकारलोपात् पूर्वमाडिति**। निभावस्याप्युपलक्षणम्। उकारलोपे

---

[1] धिनोति हव्येन हिरण्यरेतसम्' किरातार्जु० स. १ श्लो० २२ इत्यादौ प्रीणनेऽस्य प्रयोगः प्रसिद्धः।

जिन्वतीत्यादि । रिवि ५९५ रवि ५९६ धवि ५९७ गत्यर्थाः । रिण्वति । रण्वति । धन्वति । कृवि ५९८ हिंसाकरणयोश्च । चकाराद्गतौ । कृणोति इत्यादि धिनोतिवत् । अयं स्वादौ च । मव ५९९ बन्धने । मवति । मेवतुः मेवुः । अ-वीत्-अमावीत् । अव ६०० रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेश-श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् । धावु ६०१ गतिशुद्ध्योः । स्वरितेत् । धावति-धावते । दधाव-दधावे ।

अथोष्मान्ता आत्मनेपदिनः । धुक्ष ६०२ धिक्ष ६०३ सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । वृक्ष ६०४ वरणे । वृक्षते । ववृक्षे । शिक्ष ६०५ विद्योपादाने । शिक्षते । भिक्ष ६०६ भिक्षायामलाभे लाभे च । भिक्षते । क्लेश ६०७ अव्यक्तायां वाचि । बाधने इति दुर्गः । क्लेशते । चिक्लेशे । दक्ष ६०८ वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । दीक्ष ६०९ मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ईक्ष ६१० दर्शने । ईक्षांचक्रे । ईष ६११ गतिहिंसादर्शनेषु । ईषांचक्रे । भाष ६१२ व्यक्तायां वाचि । भाषते । वर्ष ६१३ स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । गेषृ ६१४ अन्विच्छायाम् । ग्लेषृ इत्येके । अन्विच्छा अन्वेषणम् । जिगेषे । पेषृ ६१५ प्रयत्ने । पेषते । जेषृ ६१६ णेषृ ६१७ एषृ ६१८ प्रेषृ ६१९ गतौ । जेषते । नेषते । एषांचक्रे । पिप्रेषे । रेषृ ६२० हेषृ ६२१ ह्रेषृ ६२२ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वौ अश्वशब्दे । रेषते हेषते । ह्रेषते । कासृ ६२३ शब्दकुत्सायाम् । कासांचक्रे । भासृ ६२४ दीप्तौ । बभासे । णासृ ६२५ रासृ ६२६ शब्दे । नासते । प्रणासते । णस ६२७ कौटिल्ये । नसते । भ्यस ६२८ भये । भ्यसते । बभ्यसे । आङः शसि ६२९ इच्छायाम् । आशंसते । आशशंसे । ग्रसु ६३० ग्लसु

---

कृते अकृते च निभावस्य आडागमस्य च प्रवृत्त्या नित्यत्वादुकारलोपात्पूर्वमेव निभावाडागमयोः कृतयोः उकारलोपस्याप्रसक्तौ आटः पित्त्वेन ङित्त्वाभावादुकारस्य गुणे अवादेशे च धिनवानीति रूपमिति भावः । अधिनोत् । धिनुयात् । धिन्व्यात् । अधिन्वीत् । अधिन्विष्यत् ।

**कृणोतीत्यादीति** । धिविवद्रूपाणीति भावः । **अयं स्वादौ चेति** । कृविरित्यर्थः । **अव रक्षणेति** । स्वाम्यर्थः ऐश्वर्यम् । **मा भवानवीदिति** । नेटीति न वृद्धिः । मव्यादयोऽवत्यन्ताः परस्मैपदिनो गताः । **धावु गतीति** । उदिदयम् । **स्वरितेदिति** । ततश्च कर्तृगामिनि फले आत्मनेपदम् । अन्यथा परस्मैपदमिति भावः । **अथोष्मान्ता इति** । तत्र धुक्षेत्यारभ्य कासृधातोः प्राक् षकारान्ताः । तत्र क्लेशधातुरेकः शकारान्तः । **दीक्ष मौण्ड्येति** । पञ्चार्थाः । णेषृधातुर्णोपदेशः । कासृधातुमारभ्य ईहधातोः प्राक् सकारान्ताः । **कासांचक्र इति** । कास्प्रत्ययादि-

**६३१ अदने।** जग्रसे। जग्लसे। **ईह ६३२ चेष्टायाम्।** ईहांचक्रे। **बहि ६३३ महि ६३४ वृद्धौ।** बंहते। बबंहे। मंहते। **अहि ६३५ गतौ।** अंहते। आनंहे। **गर्ह ६३६ गल्ह ६३७ कुत्सायाम्।** जगर्हे। जगल्हे। **बर्ह ६३८ बल्ह ६३९ प्राधान्ये।** ओष्ठ्यादी। **वर्ह ६४० वल्ह ६४१ परिभाषणहिंसाच्छादनेषु।** दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः। **प्लिह ६४२ गतौ।** पिप्लिहे। **वेह ६४३ जेह ६४४ बाह ६४५ प्रयत्ने।** आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्त्योष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि। बबाहे। **द्राह ६४६ निद्राक्षये।** निक्षेपे इत्येके। **काशृ ६४७ दीप्तौ।** चकाशे। **ऊह ६४८ वितर्के।** ऊहांचक्रे। **गाहू ६४९ विलोडने।** गाहते। जगाहे। जगाहिषे-जघाक्षे। जगाहिढ्वे-जगाहिध्वे-जघाढ्वे। गाहिता। **(२३३५) ढो ढे लोपः। ८। ३। १३॥** ढस्य लोपः स्यात् ढे परे। गाढा। गाहिष्यते-घाक्ष्यते। गाहिषीष्ट-घाक्षीष्ट। अगाहिष्ट-अगाढ

---

त्याम्। णासृधातुर्णसधातुश्च णोपदेशः। **आङः शसीति।** आङः परः शसिधातुरिच्छायामित्यर्थः। ईहेत्यारभ्य काशृधातुवर्जं घुषि कान्तीत्यतः प्राक् हकारान्ताः। काशृधातुस्तु शकारान्तः। प्लिहधातुरिदुपधः। **ऊह वितर्के इति।** युक्त्या अर्थनिर्णयो वितर्कः। 'अनुक्रमप्यूहति पण्डितो जनः' इत्यत्र तु अनुदात्तेत्वलक्षणात्मनेपदमनित्यमिति बोध्यम्।

गाहूधातुरूदित्त्वाद्वेट्। तदाह—**जगाहिषे जघाक्षे इति।** इडभावे जगाह् से इति स्थिते हो ढः, एकाच इति भष्भावेन गस्य घः, षढोरिति ढस्य कः, सस्य षः। **जगाहिढ्वे जगाहिध्वे इति।** इट्पक्षे 'विभाषेटः' इति ढत्वविकल्पः। इडभावे त्वाह—**जघाढ्व इति।** जगाह् ध्वे इति स्थिते हस्य ढः, धस्य ष्टुत्वेन ढः' गस्य भष् घकारः, पूर्वस्य ढस्य 'ढो ढे लोपः' इति वक्ष्यमाणो लोपः। ढलोपसूत्रं त्विहैव पठितुं युक्तम्। **गाहितेति।** इट्पक्षे रूपम्। इडभावे तु गाह् ता इति स्थिते हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे, ष्टुत्वेन धस्य ढत्वे, गाढ् ढा इति स्थिते—**ढो ढे।** ढः इति षष्ठ्यन्तम्। तदाह—**ढस्येति।** ढकारस्येत्यर्थः। इति पूर्वस्य ढकारस्य लोपे गाढा इति रूपम्। ढलोपे ष्टुत्वस्यासिद्धत्वं तु न, तथा सति ढलोपविधिवैयर्थ्यात्। **घाक्ष्यते इति।** इडभावे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। **घाक्षीष्टेति।** आशीर्लिङि सीयुटि इडभावपक्षे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। **अगाहिष्टेति।** सिचि इट्, सस्य षः, तकारस्य ष्टुत्वेन टः। इडभावे त्वाह—**अगाढेति।** अगाह् स् त इति स्थिते सिचि इडभावे झलो झलीति लोपः ढत्वधत्वष्टुत्वढलोपाः। सलोपात्पूर्वं भष्भावस्तु न, भष्भावस्यासिद्धतया झलो झलीति सलोपस्य पूर्वं प्रवृत्तेः। न च

अघाक्षाताम् अघाक्षत । अगाढाः अघाढ्वम् । अघाक्षि । गृहू ६५० ग्रहणे । गर्हते । जगृहे । 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन' (वा ५६३) जगृहिषे–जघृक्षे । जघृढ्वे । गर्हिता–गर्ढा । गर्हिष्यते–घर्क्ष्यते । गर्हिषीष्ट–घृक्षीष्ट । लुङि अगर्हिष्ट । इडभावे । (२३३६) **शल इगुपधादनिटः क्सः ।** ३ । १ । ४५ ॥ इगुपधो यः शलन्तस्तस्मादनिटः च्लेः क्सादेशः स्यात् । अघृक्षत । (२३३७) **क्सस्याचि ।** ७ । ३ । ७२ ॥ अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' [ सू ४२ ] अघृक्षाताम् अघृक्षन्त । ग्लहू ६५१

---

कृतेऽपि सलोपे प्रत्ययलक्षणेन सकारपरकत्वात् भष् दुर्वार इति शङ्क्यम्, वर्णाश्रये प्रत्ययलक्षणाभावादिति भावः । **अघाक्षातामिति** । इडभावपक्षे ढघकशाः । **अघाक्षतेति** । पूर्ववत् । **अगाढा इति** । थास् सिच् इडभावे सलोपः । ढत्वधत्वष्टुत्वढलोपाः । **अघाढ्वमिति** । ध्वमि इडभावपक्षे सलोपः । ढत्वधत्वष्टुत्वढलोपाः । ध्वममाश्रित्य ढलोपात्पूर्वं भष्भावः । **अघाक्षीति** । इडभावे हस्य ढः, भष्भावः, ढस्य कः, सस्य षत्वमिति भावः । अघाक्ष्वहि । अगाहिष्यत अघाक्ष्यत ।

गृहूधातुः ऊदित् ऋदुपधः । **गर्हते इति** । लटस्तिपि शपि लघूपधगुणे रपरत्वम् । **जगृहे इति** । असंयोगादिति कित्त्वाद्गुणाभावः । न च कित्त्वात् परत्वाद्गुणः शङ्क्यः, 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' इति वार्तिकादिति भावः । ऊदित्त्वादिड्विकल्पं मत्वा आह—**जगृहिषे जघृक्षे इति ।** अभ्यासे उरदत्वं, हलादिः शेषः, जश्त्वम्, इट्, षत्वम् । इडभावे तु ढत्वभष्भावकत्वषत्वानि । ध्वमि जगृहिध्वे इति सिद्धवत्कृत्य इडभावे आह—**जघृढ्वे इति ।** हस्य ढः, भष्भावष्टुत्वढलोपाः । **गर्ढेति** । इडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपाः । **घर्क्ष्यते इति** । गुणः, रपरत्वं, हस्य ढः, भष्भावः, ढस्य कः, षत्वम् । **घृक्षीष्टेति** । आशीर्लिङः सीयुटि इडभावे लिङ्सिचाविति कित्त्वाद्गुणाभावे, हस्य ढः, भष्भावः, ढस्य कः, षत्वम् । **अगर्हिष्टेति** । सिच इटि गुणे रपरत्वे षत्वे रूपम् । **शल इगुपधा । शलन्त इति** । धातोरेकाचः' इत्यतोऽनुवृत्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । सिचोऽपवादः क्सादेशः अदन्तः । ककार इत् । **अघृक्षतेति** । च्लेः क्सः । तस्य कित्त्वादृकारस्य न गुणः । हस्य ढः, भष्भावः, ढस्य कः, षत्वमिति भावः । अघृक्ष आताम् इति स्थिते 'आतो ङितः' इति इयादेशे प्राप्ते—**क्सस्य ।** अचीत्यस्याङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः । 'घोर्लोपो लेटि वा' इत्यतः लोप इत्यनुवर्तते । तदाह—**अजादावित्यादिना । अलोऽन्त्यस्येति** । अन्त्यस्याकारस्य लोप इति भावः । वस्तुतस्तु 'लुग्वा दुहदिह' इत्युत्तरसूत्रादात्मनेपदे इत्यपकृष्य तद्विशेषणत्वादचीति तदादिविधिः । तेन दृशेः क्सप्रत्यये तादृक्षा इत्यादौ नायं लोपः । अजादौ तङीत्येव क्वचित्पाठो दृश्यते । **अघृक्षातामिति** । अघृक्ष

च। ग्लहते। घुषि ६५२ कान्तिकरणे। घुंषते। जुघुंषे। केचित् घष इत्यदुपधं पठन्ति।

अथार्हत्यन्ताः परस्मैपदिनः। घुषिर् ६५३ अविशब्दने। विशब्दनं प्रतिज्ञानं,ततोऽन्यस्मिन्नर्थे इत्येके। शब्दे इत्यन्ये पेठुः। घोषति। जुघोष। घोषिता इरित्त्वादङ्वा। अघुषत्-अघोषीत्। अक्षू ६५४ व्याप्तौ। (२३३८) अक्षोऽन्यतरस्याम् ।३।१।७५॥ अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे। पक्षे शप्। अक्ष्णोति अक्ष्णुतः अक्ष्णुवन्ति। अक्षति अक्षतः अक्षन्ति। आनक्ष। आनक्षिथ-आनष्ठ। अक्षिता-अष्टा। अक्षिष्यति। 'स्कोः' [सू ३८०] इति

आताम् इति स्थिते वसाकारस्य लोपे अतः परत्वाभावात् 'आतो ङितः' इति इय नेति भावः। **अघृक्षन्तेति**। झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अकारलोपाभावादतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न। कृते तु झोऽन्तादेशे क्सस्याकारलोपः पररूपं वा। **ग्लह चेति**। ग्लहधातुरपि ग्रहणे वर्तत इत्यर्थः। अदुपधोऽयम्। **घुषि कान्तीति**। उदुपधोऽयम्। इदित्त्वान्नुम्। नश्चेत्यनुस्वारः। यण्परकत्वाभावान्न परसवर्णः। तदाह—**घुंषत इति**। सेट्कोऽयम्। अदुपधपक्षे तु घंषते। जघंषे। ऊष्मान्ता आत्मनेपदिनो गताः।

**अथार्हत्यन्ताः परस्मैपदिन इति**। ऊष्मान्ता इति शेषः। तत्र तुस हसेत्यतः प्राक् षान्ताः। **घुषिरिति**। इर् इत्। **प्रतिज्ञानमिति**। वेदाः प्रमाणमित्याद्यभ्युपगम इत्यर्थः। **ततोऽन्यस्मिन्निति**। विशब्दनात् अन्यत् अविशब्दनं तस्मिन्नित्यर्थः। **इरित्त्वादङ् वेति**। इरितो वेत्यनेनेति शेषः। **अघुषदिति**। अङो ङित्त्वान्न लघूपधगुणः। **अघोषीदिति**। अङभावपक्षे लघूपधगुणे 'इट ईटि' इति सिज्लोपः। हलन्तलक्षणवृद्धेः 'नेटि' इति निषेधः। अक्षूधातुः ऊदित्त्वाद्वेट्कः। **अक्षोऽन्यतरस्याम्**। अक्ष इति पञ्चमी। स्वादिभ्यः श्नुरित्यतः श्नुरिति, 'कर्तरि शबि'त्यतः कर्तरीति, 'सार्वधातुके यगि'त्यतः सार्वधातुक इति चानुवर्तते। तदाह—**अक्षो वेति**। श्नुप्रत्ययस्य शित्त्वं सार्वधातुकत्वार्थम्। तत्फलं तु 'स्वादिभ्यः श्नुः' इत्यत्र वक्ष्यते। **अक्ष्णोतीति**। तिपि श्नुः तस्य तिपः पित्त्वेन ङित्त्वाभावात् सार्वधातुकेति गुणः णत्वम्। **अक्ष्णुत इति**। तसः अपित्त्वेन ङित्त्वात् श्नोर्न गुणः। **अक्ष्णुवन्तीति**। ङित्त्वाद्गुणाभावे उवङ्। अक्ष्णोषि अक्ष्णुथः अक्ष्णुथ। अक्ष्णोमि अक्ष्णुवः अक्ष्णुमः। **अक्षतीति**। शप्पक्षे रूपम्। **आनक्षेति**। णलि द्विहल्वान्नुट्। आनक्षतुः आनक्षुः। ऊदित्त्वादिट्पक्षे आह—**आनक्षिथेति**। इडभावे आह—**आनष्ठेति**। आनक्ष् थ इति स्थिते स्कोरिति कलोपः षस्य ष्टुत्वेन ठः। **अष्टेति**। लुटि तासि इडभावपक्षे स्कोरिति कलोपे तकारस्य ष्टुत्वेन टः। अक्ष् स्य तीति स्थिते, प्रक्रियां दर्शयति—**स्कोरिति कलोपः, षढोः कः**

१ एवं च अन्तादेशे कृतेऽल्विधित्वं न तस्य झत्वाभावात् अदादेशो न।

क्षलोपः । 'षढोः कः सि' [ सू २९५ ) अक्षति । अक्ष्णोतु । अक्ष्णुहि अक्षणवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् अक्ष्णुयुः । अक्ष्यात् । ऊदित्त्वाद्वेट् । 'नेटि' ( सू २२६८ ) । मा भवानक्षीत् आक्षिष्टाम् आक्षिषुः । इडभावे तु मा भवानाक्षीत् आष्टाम् आक्षुः । तक्षू ६५५ त्वक्षू ६५६ तनूकरणे । ( २३३९ ) **तनूकरणे तक्षः । ३ । १ । ७६ ॥** श्नुः स्याद्वा शब्विषये । तक्ष्णोति-तक्षति

---

**सीति** । कात्परत्वात् सस्य षत्वं च । **अक्ष्णोत्विति** । अक्ष्णोतु अक्ष्णुतात्-अक्ष्णुताम् अक्ष्णुवन्तु । **अक्ष्णुहीति** । संयोगपूर्वत्वादुतश्चेति हेर्लुक् न । हेरपित्त्वेन ङित्त्वात् श्नोर्न गुणः । अक्ष्णुतात् अक्ष्णुतम् अक्ष्णुत । **अक्ष्णवानीति** । आटः पित्त्वेन ङित्त्वाभावान्न गुणनिषेधः । गुणे अवादेशः । अक्ष्णवाव अक्ष्णवाम । शपि तु अक्षत्वित्यादि । **आक्ष्णोदिति** । लङस्तिपि श्नोर्गुणः आट् वृद्धिः । आक्ष्णुताम् आक्ष्णुवन् । आक्ष्णोः आक्ष्णुतम् आक्ष्णुत । **आक्ष्णवमिति** । मिपः अम् श्नोर्गुणः अवादेशः । आक्ष्णुव आक्ष्णुम । **अक्ष्णुयादिति** । विधिलिङि यासुटो ङित्त्वात् श्नोर्न गुणः । **अक्ष्णुयुरिति** । 'लिङः सलोपः' इति सलोपे 'उस्यपदान्तात्' इति पररूपमिति भावः । अक्ष्णुयाः अक्ष्णुयातम् अक्ष्णुयात । अक्ष्णुयाम् अक्ष्णुयाव अक्ष्णुयाम । शप्पक्षे अक्षेदित्यादि । **अक्ष्यादिति** । आशीर्लिङि आर्धधातुकत्वान्न श्नुः, नापि शप् ।

लुङि सिचि विशेषमाह—**ऊदित्त्वाद्वेडिति** । तत्र इट्पक्षे आह—**नेटीति** । हलन्तलक्षणा वृद्धिर्नेत्यर्थः । नच अभैत्सीदित्यादावेकेन हला व्यवधाने हलन्तलक्षणवृद्धेश्चरितार्थत्वादत्र न तत्प्रसक्तिरिति शङ्क्यम्, रञ्जेः अराङ्क्षीदित्यत्र वृद्धिसिद्धये अनेकाल्व्यवधानेऽपि हलन्तलक्षणवृद्धिप्रवृत्तेर्भाष्यादौ प्रपञ्चितत्वादिति भावः । **मा भवानक्षीदिति** । आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्यां च रूपे भेदाभावात् मा भवानित्युपात्तम् । **आक्षिष्टाम्** । **आक्षिषुरिति** । अत्रापि मा इति संबध्यते । **इडभावे त्विति** । लुङस्तिपि अक्ष् स् ईदिति स्थिते इडभावान्नेटीति निषेधाप्रसक्त्या हलन्तलक्षणवृद्धौ 'स्कोः' इति कलोपे 'षढोः' इति कत्वे षत्वमिति भावः । अत्र 'नेटि' इति निषेधाभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव 'मा भवान्' इत्यत्राप्युपात्तमिति बोध्यम् । **आष्टामिति** । अक्ष् स् ताम् इति स्थिते हलन्तलक्षणवृद्धौ 'झलो झलि' इति सिज्लोपे स्कोरिति कलोपे तकारस्य ष्टुत्वम् । **आक्षुरिति** । अक्ष् स् उस् इति स्थिते हलन्तलक्षणवृद्धौ स्कोरिति कलोपे षस्य कत्वे सस्य षत्वमिति भावः । आक्षीः आष्टम् आष्ट । आक्षम् आक्ष्व आक्ष्म । आक्षिष्यत्—आक्ष्यत् आक्ष्यताम् आक्ष्यन् । आक्ष्यः आक्ष्यतम् आक्ष्यत । आक्ष्यम् आक्ष्याव आक्ष्याम ।

**तक्षू त्वक्षू इति** । स्थूलस्य, काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणं तनूकरणम् । **तनूकरणे** । शेषपूरणेन सूत्रं व्याचष्टे—**श्नुः स्याद्वा शब्विषये**

वा काष्ठम्। ततक्षिथ-ततष्ठ। अतक्षीत् अतक्षिष्टाम्। अताक्षीत् अताष्टाम्। तनूकरणे किम्। वाग्भिः संतक्षति। भर्त्सयतीत्यर्थः। उक्ष ६५७ सेचने। उक्षांचकार। रक्ष ६५८ पालने। णिक्ष ६५९ चुम्बने। प्रणिक्षति। त्रक्ष ६६० ष्ट्रक्ष ६६१ णक्ष ६६२ गतौ। त्रक्षति। स्त्रक्षति। नक्षति। वक्ष ६६३ रोषे। सङ्घाते इत्येके। मृक्ष ६६४ सङ्घाते। म्रक्ष इत्येके। तक्ष ६६५ त्वचने त्वचनं संवरणं त्वचो ग्रहणं च। पक्ष परिग्रहे इत्येके। सूर्क्ष ६६६ आदरे। सुसूर्क्ष। अनादरे इति तु क्वाचित्कोऽपपाठः। 'अवज्ञावहेलनमसूर्क्षणम्' इत्यमरः। काक्षि ६६७ वाक्षि ६६८ माक्षि ६६९ काङ्क्षायाम्। द्राक्षि ६७० ध्राक्षि ६७१ ध्वाक्षि ६७२ घोरवाशिते च। चूष ६७३ पाने। चुचूष। तूष ६७४ तुष्टौ। पूष ६७५ वृद्धौ। मूष ६७६ स्तेये। लूष ६७७ रूष ६७८ भूषायाम्। शूष ६७९ प्रसवे। प्रसवोऽभ्यनुज्ञानम्। तालव्योष्मादिः। यूष ६८० हिंसायाम्। जूष ६८१ च। भूष ६८२ अलङ्कारे। भूषति। ऊष ६८३ रुजा

---

इति। स्वादिभ्यः श्नुरित्यतः श्नुरिति, कर्तरि शबित्यतः कर्तरीति, सार्वधातुके यगित्यतः सार्वधातुक इति चानुवर्तते। तनूकरणेऽर्थे विद्यमानात् तक्षधातोः श्नुः स्यात्कर्त्रर्थे सार्वधातुके इति फलितम्। नच तक्षूधातोस्तनूकरणार्थकत्वाव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्थमिति वाच्यम्, अत एव धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वावगमात्। **तक्ष्णोतीत्यादि।** अक्षूवद्रूपाणि लुङि सिचि इट्पक्षे नेटीति वृद्धिनिषेधे अतक्षीदिति, इडभावे तु अताक्षीदिति च रूपम् **अक्षूवत्।** एवं त्वक्षूधातुरपि। णिक्षधातुर्णोपदेशः। **प्रणिक्षतीति।** 'उपसर्गादसमासेऽपि' इति णत्वम्। **त्रक्ष ष्ट्रक्ष णक्ष गताविति।** त्रयोऽप्यकारमध्याः द्वितीयः षोपदेशः। तदाह—**स्त्रक्षतीति।** षस्य सत्वे ष्टुत्वनिवृत्तिरिति भावः। **णक्षधातुर्णोपदेशः।** सिचि नेटीति हलन्तलक्षणवृद्धिनिषेधः। **वक्ष रोष इति।** दन्त्योष्ठ्यादिः। म्रक्ष-धातुरकारमध्यः। त्वचनशब्दस्य विवरणं—**संवरणमिति।** सूर्क्षधातुः रेफमध्यः अपपाठत्वे हेतुमाह—**अवज्ञेति।** सूर्क्षधातोरनादरार्थकत्वे असूर्क्षणमित्यस्य आदरार्थकत्वापत्त्या अमरकोशे अवज्ञापर्यायत्वावगमविरोध इति भावः। **घोरवाशिते चेति।** चात् काङ्क्षायामपि। घोरवाशितं क्रूरशब्दः।

चूषेत्यारभ्य ऊष रुजायामिति यावदुदुपधाः। **ईष उञ्छ इति।** ईदुपधः। कषेत्यारभ्य दश धातवः। तत्र तृतीयो दशमश्च इदुपधः। शिषधातुरनिट्कः। क्रादिनियमात्थलि वसि मसि च नित्यमिट्, अजन्ताकारवत्त्वाभावेन थलि वेट्कत्वाभावात्। शिशेषिथ। शिशिषिव शिशिषिम। **अशिक्षदिति।** 'शल इगुपधात्' इति च्लेः क्सादेशे कित्त्वाल्लघूपधगुणनिषेधे षस्य कत्वे सस्य षत्वमिति भावः। **ववषतुरिति।** 'न शसदद' इति निषेधादेत्त्वाभ्यासलोपौ न। रुषधातुः सेट्कः। रोषति। रुरोष रुरुषतुः रुरुषुः। रुरोषिथ रुरुषथुः रुरुष। रुरोष परुरुषि

याम् । ऊषांचकार । ईष ६८४ उञ्छे । कष ६८५ खष ६८६ शिष ६८७ जष ६८८ झष ६८९ शष ६९० वष ६९१ मष ६९२ रुष ६९३ रिष ६९४ हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादिः । चकाष । चखाष । शिशेष। शिशेषिथ । शेष्टा। क्सः अशिक्षत् । अशेक्ष्यत् । जेषतुः जझषतुः। शेषतुः । ववषतुः । मेषतुः । (२३४०) **तीषसहलुभरुषरिषः** । ७ । २ । ४८॥ इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । रोषिता–रोष्टा । रोषिष्यति । रेषिता–रेष्टा । रेषिष्यति । भष ६९५ भर्त्सने । इह भर्त्सनं श्वरवः । भषति । बभाष । उष ६९६ । दाहे । ओषति । (२३४१) **उषविदजागृभ्योऽन्यतरस्याम्** । ३ । १ । ३८ ॥ एभ्यो लिट्याम्वा स्यात् । ओषांचकार । उवोष । ऊषतुः । उवोषिथ । जिषु ६९७ विषु ६९८ मिषु ६९९ सेचने । जिजेष । क्रादिनियमादिट् । विवेषिथ । विविषिव । वेष्टा । वेक्ष्यति । अविक्षत् । पुष ७०० पुष्टौ । पोषति । पोषिता । पोषिष्यति । अपोषीत् । अनिट्केषु पुष्य इति श्यना निर्देशादयं सेट् अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् । श्रिषु ७०१ श्लिषु ७०२ प्रुषु ७०३ प्लुषु ७०४ दाहे । श्रेषति । शिश्रेष ।

---

रुरुषिम । **तीषसह** । आर्धधातुकस्येत्यतः इडित्यनुवर्तते । 'स्वरतिसूति' इत्यतो वेति च । तीति सप्तम्युपादानात्तदादिविधिः । इष सह लुभ रुष रिष एषां द्वन्द्वात्पञ्चम्येकवचनम् । तदाह—**इच्छत्यादेरिति** । इच्छतीति इषेः श्तिपा निर्देशः । इषधातुर्विवक्षितः । इषु इच्छायां तुदादिः शविकरणः । इष गतौ दिवादिः श्यन्विकरणः । इष आभीक्ष्ण्ये क्र्यादिः श्नाविकरणः । तत्र 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वार्तिकात् श्यन्विकरणस्य न ग्रहणम् । **रोषिता रोष्टेति** । इडभावे ष्टुत्वेन तकारस्य टकारः । रिषेस्तादाविड्विकल्पं मत्वा आह—**रेषिता रेष्टेति** ।

**उष दाह इति** । सेट्कोऽयम् । उखधातुवत् रूपाणि । **उषविद** । कास्प्रत्ययादित्यतः आम् लिटीत्यनुवर्तते । तदाह—**एभ्यो लिटीति** । आमभावपक्षे आह—**उवोषेति** । 'अभ्यासस्यासवर्णे' इति उवङादेशः । **जिषु विषु मिषु सेचन इति** । द्वितीयो दन्त्योष्ठ्यादिः । थलि वसि मसि च विशेषमाह—**क्रादिनियमादिडिति** । **विवेषिथेति** । अजन्ताकारवत्त्वाभावेन भारद्वाजनियमाप्रवृत्तेस्थल्यपि क्रादिनियमान्नित्यमिट् । **वेष्टेति** । तासि ष्टुत्वेन तकारस्य टः । **वेक्ष्यतीति** । षढोरिति षस्य कः, सस्य षः । **अविक्षदिति** । 'शल इगुपधात्' इति क्सः, षस्य कः, सस्य षः, कित्त्वान्न गुणः । पुषधातुः सेडिति मत्वा आह—**पोषितेति** । **अपोषीदिति** । नेटीति वृद्धिनिषेधः । नन्वनिट्सु पुषेः पाठात् कथं सेट्कत्वमित्यत आह—**अनिट्केष्विति । अत इति** । सेट्कत्वात् क्सो नेत्यर्थः ।

श्रेषिता। श्लेषति। शिश्लेष। श्लेषिता। अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणम् इति कैयटादयः। यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तं तत्स्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम्। पुप्रोष। पुप्लोष। पृषु ७०५ वृषु ७०६ मृषु ७०७ सेचने। मृषु सहने च। इतरौ हिंसासंक्लेशनयोश्च। पर्षति। पपर्ष। पृष्यात्। घृषु ७०८ सङ्घर्षे। हृषु ७०९ अलीके। तुस ७१० ह्रस ७११ ह्लस ७१२ रस ७१३ शब्दे। तुतोस। जह्रास। जह्लास। ररास। लस ७१४ श्लेषणक्रीडनयोः। घस्लृ ७१५ अदने। अयं न सार्वत्रिकः। 'लिट्यन्यतरस्याम्' (सू २४२४) इत्यदेर्घस्लादेशविधानात्। ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः। अत्रैव पाठः शपि परस्मैपदे लिङ्गम्। लृदित्करणमङि। अनिट्कारिकासु पाठो वलाद्यार्धधातुके। क्मरचि तु विशिष्योपादानम्। घसति। घस्ता। (२३४२) सः स्यार्धधातुके। ७। ४। ४९॥ सस्य तः

---

ननु पुषादित्वलक्षणः अङ् कुतो नेत्यत आह—**अङ्विधाविति**। एतच्चानुपदमेव पुषादिसूत्रव्याख्यावसरे स्पष्टीभविष्यति। **अयमपीति**। पुषधातुवत् श्लिषधातुरपि भौवादिक सेडित्यर्थः। **कैयटादय इति**। 'श्लिष आलिङ्गने' इति सूत्रे कैयटहरदत्तादिभिस्तथा प्रपञ्चितत्वादिति भावः। **द्वयोर्ग्रहणमिति**। भौवादिकदैवादिकयोरित्यर्थः। **स्वोक्तीति**। 'श्लिष आलिङ्गने' इति सूत्रे दैवादिकश्लिषेरनिट्केषु ग्रहणमिति न्यासकृता कैयटादिभिश्चोक्तत्वादिति भावः। पृषु वृषु इत्यारभ्य हृषुपर्यन्ता ऋदुपधाः। अलीकं मिथ्याभवनं मिथ्योक्तिर्वा। तुस ह्लसेत्यारभ्य णश गतावित्यतः प्राक् सकारान्ताः।

घस्लृधातुरनिट्कः। **अयमिति**। घस्लृधातुः सर्वेषु न प्रयोज्य इत्यर्थः। कुत इत्यत आह—**लिटीति**। यद्ययं सार्वत्रिकः स्यात् तदा लिट्यपि प्रयुज्येत। ततश्च 'अद भक्षणे' इति धातोर्लिट्यन्यतरस्यामिनि घस्लृभावविधिर्व्यर्थः स्यादिति भावः। असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेत्यत आह—**ततश्चेति**। यत्र घस्लृधातोः प्रयोगे ज्ञापकं प्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोग इत्यर्थः। तत्र तावल्लिङ्गं दर्शयति—**अत्रैवेति**। भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः। नच धातुसंज्ञार्थः पाठ इति शङ्क्यम्, द्युत दीप्तावित्यतः प्राक् पाठेनैव सिद्धे अत्र क्रमे तत्पाठवैयर्थ्यादिति भावः। **लृदित्करणमङीति**। प्रयोगे लिङ्गमिति शेषः। **अनिट्कारिकास्विति**। अनुदात्तोपदेशेषु घस्लृधातोः पाठः वलाद्यार्धधातुके प्रयोगे लिङ्गमित्यर्थः। अथ क्वचिदस्य प्रयोगे प्रत्यक्षवचनं दर्शयति—**क्मरचीति**। 'सृघस्यदः क्मरच्' इत्यत्र विशिष्य घसेरुपादानं क्मरचि प्रयोगे प्रमाणमित्यर्थः। **घसतीति**। लटि तसाद्युपलक्षणमिदम्। लिटि अस्य

---

१ एवं च लिटि थलि 'जघसिथ' इत्येकमेव भवति न तु 'जघस्थ' इति अस्य लिटि प्रयोगे तु रूपद्वयं थलि दुर्वारमिति भावः।

स्यात्सादावार्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङ्गाद्यभावादाशिष्यस्याप्रयोगः । ( २३४३ ) पुषादिद्युताद्यॢदितः परस्मैपदेषु । ३ । १ । ५५ ॥ श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् । जर्ज ७१६ चर्च ७१७ झर्झ ७१८ परिभाषणहिंसातर्जनेषु । पिसृ ७१९ पेसृ ७२० गतौ । पिपिसतुः । पिपेसतुः । हसे ७२१ हसने । एदित्वान्न वृद्धिः । अहसीत् । णिश ७२२ समाधौ । तालव्योष्मान्तः । प्रणिशति । मिश ७२३ मश ७२४ शब्दे रोषकृते च । तालव्योष्मान्तौ । शव ७२५ गतौ । दन्त्योष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत्—अशावीत् । शश ७२६ प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश शेशतुः शेशुः । शेशिथ । शसु ७२७ हिंसायाम् । दन्त्योष्मान्तः । 'न शसदद–' ( सू २२२३ ) इत्येत्वं न । शशसतुः शशसुः । शशसिथ । शंसु ७२८ स्तुतौ । अयं दुर्गतावपीति दुर्गः । 'नृशंसो घातुकः क्रूरः' इत्यमरः । शशंस । आशिषि नलोपः । शस्यात् चह ७२९ परिकल्कने । कल्कनं शाठ्यम् । अचहीत् । मह ७३० पूजायाम् । अमहीत् । रह ७३१ त्यागे । रहि ७३२ गतौ । रंहति । रंह्यात् । दृह ७३३

---

प्रयोगाभावाल्लुङ्युदाहरति—**घस्तेति । सः सि ।** सः इति छेदः । सः इति षष्ठ्यन्तम् । सि इति सप्तम्यन्तम् आर्धधातुकविशेषणम् । तदादिविधिः । 'अच उपसर्गात्तः' इत्यतः तः इत्यनुवर्तते । अकार उच्चारणार्थः । तदाह—**सस्य तः स्यादिति ।** आदेशे अकारस्य उच्चारणार्थत्वात्तकारः स्यादित्यर्थः ।

लुङि च्लेः सिचि प्राप्ते—**पुषादि ।** 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्यः' इत्यतः अङिति चानुवर्तते । पुषादि द्युतादि ऌदित् एषां समाहारद्वन्द्वात्पञ्चमी । तत्र पुषधातुस्तु भ्वादौ क्र्यादौ चुरादौ दिवादौ चास्ति । तत्र यदि भौवादिकः पुषादिगणो गृह्येत, तर्हि द्युतादिग्रहणमनर्थकं स्यात्, पुषादिगणोत्तरमेवात्र द्युतादिगणपाठात् । नापि क्र्याद्यन्तर्गणः । तत्र हि 'मुष स्तेये' 'खच भूतप्रादुर्भावे' 'हेठ च' 'ग्रह उपादाने' इति चत्वार एव पठ्यन्ते । यदि त एवात्र पुषादयो विवक्षिताः स्युः तर्हि लाघवात् ऌदित एव ते क्रियेरन् । नाप्यत्र चौरादिकःपुषादिर्गृह्यते, णिचा च्लेर्व्यवहितत्वात् । अतः परिशेषात् दिवादय एव गृह्यन्ते । तदाह—**श्यन्विकरणेति । जर्ज चर्च झर्झेति ।** एतेषां चवर्गीयान्तेष्वेव पाठ उचितः । **हसे हसन इति ।** एदिदयम् । **न वृद्धिरिति ।** ह्म्यन्तेत्यनेनेति शेषः। **णिश समाधाविति ।** णोपदेशत्वादुपसर्गादसमासेऽपीति **नस्य णत्वम्।** तदाह—**प्रणेशतीति ।** 'शसु हिंसायाम्' इत्यतः प्राक् शकारान्ताः । **शवति**स्तु वान्तः । **शंस्विति ।** नोपधः, कृतानुस्वारस्य निर्देशः । 'चह परिकल्कने' इत्यारभ्य अर्हतिपर्यन्ता हकारान्ताः । **रह त्यागे इति ।** नायमिदित् । **रहि गताविति ।** अयमिदित् । **दृह दृहीति ।** ऋदुपधा एते । द्वितीयचतुर्थाविदितौ ।

**रहि ७३४ बृह ७३५ बृहि ७३६ वृद्धौ**। रहति। ररह ररहतुः। रंहति। बर्हति। बृंहति। बृहि शब्दे च। 'बृंहितं करिगर्जितम्' इत्यमरः। बृहिर् इत्येके। अबृहत्-अबर्हीत्। तुहिर् ७३७ दुहिर् ७३८ उहिर् ७३९ अर्दने। तोहति। तुतोह। अतुहत्-अतोहीत्। दोहति। दुदोह। अदुहत्—अदोहीत्। अनिर्ट् कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति। ओहति। उवोह ऊहतुः। ओहिता। मा भवानुहत्। औहीत्। **अर्ह ७४० पूजायाम्**। आनर्ह।

अथ कृपूपर्यन्ता अनुदात्तेतः। **द्युत ७४१ दीप्तौ**। द्योतते। (२३४४) **द्युतिस्वाप्योः संप्रसारणम्**। ७। ४। ६७॥ अनयोरभ्यासस्य संप्रसारणं स्यात्। दिद्युते दिद्युताते। द्योतिता। (२३४५) **द्युद्भ्यो लुङि**। १। ३। ९१॥ द्युतादिभ्यो लुङः परस्मैपदं वा स्यात्। पुषादिसूत्रेण परस्मैपदे अङ्। अद्युतत्-अद्योतिष्ट। **श्विता ७४२ वर्णे**। श्वेतते। शिश्विते। अश्वितत्-अश्वेतिष्ट। **ञि मिदा ७४३ स्नेहने**। मेदते। (२३४६) **मिदेर्गुणः**। ७। ३। ८२॥ मिदे-

---

**अबृहत्। अबर्हीदिति**। इरित्त्वादङ्विकल्प इति भावः। **उवोहेति**। उहिधातोर्लिटि द्वित्वे हलादिशेषे पुगन्तलक्षणे गुणे 'अभ्यासस्यासवर्णे' इत्युवङ्। **मा भवानुहदिति**। इरित्त्वादङि रूपम्। **औहीदिति**। अङभावपक्षे च्लेः सिचि तस्य इटि 'अस्तिसिचः' इति तकारस्य ईटि 'इट ईटि' इति सिचो लोपे 'आडजादीनाम्' इति आटि वृद्धिः। माङ्योगे तु मा भवानुहीत्। **आनर्हेति**। 'अत आदेः' इति दीर्घे नुट्।

**कृपूपर्यन्ता अनुदात्तेत इति**। द्युतेत्यारभ्य कृपूपर्यन्ता इत्यर्थः। **द्युतिस्वाप्योः। अभ्यासस्येति**। 'अत्र लोपोऽभ्यासस्य' इत्यतः तदनुवृत्तेरिति भावः। **दिद्युते इति**। द्वित्वे 'हलादिः शेषः' इत्यनेन यकारस्य लोपे प्राप्ते तदपवादत्वेन 'द्युतिस्वाप्योः' इति संप्रसारणे, 'संप्रसारणाच्च' इति उकारस्य पूर्वरूपे रूपम्। **द्युद्भ्यो लुङि**। बहुवचनात् द्युतादिभ्य इति गम्यते। दिग्योगे पञ्चमी। 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येति लभ्यते। 'शेषात्कर्तरि' इत्यतः परस्मैपदमित्यनुवर्तते। तदाह—**द्युतादिभ्य इति। परस्मैपदे अङिति**। आत्मनेपदपक्षे सिजेव नत्वङ्, पुषादिसूत्रे परस्मैपदग्रहणादिति भावः। तदाह—**अद्योतिष्टेति। श्विता वर्णे इति**। श्वेतवर्णकरणे श्वेतीभवने वेत्यर्थः। **अश्वितदिति**। द्युतादित्वादङ्। **अश्वेतिष्टेति**। आत्मनेपदपक्षे रूपम्। एवमग्रेऽपि द्युतादौ लुङि रूपभेदो ज्ञेयः। **ञि मिदा स्नेहने इति**। ञिरित् 'ञीतः क्तः' इत्येतदर्थः। मिमिदे इत्यत्र लिटः असंयोगादिति कित्त्वेऽपि गुणं शङ्कितुमाह—**मिदेर्गुणः**। मिदेरित्यवयवषष्ठी। गुणश्रुत्या 'इको गुणवृद्धी' इति परिभाषया इक

रिको गुणः स्यादित्संज्ञकशकारादौ। एशः आदिशित्त्वाभावाभानेन गुणः। मिमिदे। अमिदत्—अमेदिष्ट। ञि ष्विदा ७४४ स्नेहनमोचनयोः। मोहनयोः इत्येके। स्वेदते। सिष्विदे। अस्विदत्—अस्वेदिष्ट। ञि क्ष्विदा च इत्येके। अक्ष्विदत्—अक्ष्वेदिष्ट। रुच ७४५ दीप्तावभिप्रीतौ च। रोचते सूर्यः। हरये रोचते भक्तिः। अरुचत्—अरोचिष्ट। घुट ७४६ परिवर्तने। घोटते। जुघुटे। अघुटत्–अघोटिष्ट। रुट ७४७ लुट ७४८ लुठ ७४९ प्रतिघाते। अरुटत्—अरोटिष्ट। शुभ ७५० दीप्तौ। क्षुभ ७५१ संचलने। णभ ७५२ तुभ ७५३ हिंसायाम्। आद्योऽभावे च। 'नभन्तामन्यके समे'। 'मा भूवन्नन्यके सर्वे' इति निरुक्तम्। अनभत्—अनभिष्ट। अतुभत्—अतोभिष्ट। इमौ दिवादौ क्र्यादौ च। स्रंसु ७५४ ध्वंसु ७५५ भ्रंसु ७५६ अवस्रंसने। ध्वंसु गतौ च। अङि नलोपः। अस्रसत्–अस्रंसिष्ट। 'नास्रसत्करिणां ग्रैवम्' इति रघुवंशे। भ्रंशु इत्यपि केचित्पेठुः। अत्र तृतीय एव तालव्यान्त इत्यन्ये। भ्रशु भ्रंशु अधः पतने इति दिवादौ। स्रम्भु ७५७ विश्वासे। अस्रभत्–अस्रम्भिष्ट। दन्त्यादिरयम्। ताल-

इत्युपतिष्ठते 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीत्यनुवर्तते। श् चासाविच्चेति कर्मधारयः। तेन च अधिकृताङ्गाक्षिप्तः प्रत्ययो विशेष्यते। तदादिविधिः। इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते। तदाह—**मिदेरित्यादिना**। दैवादिकमिदेः श्यनि मेद्यते इत्याद्युदाहरणम्। श् इत् यस्येति बहुव्रीहिमाश्रित्य शिति प्रत्यये परे मिदेरिको गुण इत्येव कुतो न व्याख्यायत इत्याशङ्क्य मिमिदे इत्यत्र गुणाभावार्थमित्संज्ञकशकारादाविति व्याख्येयमित्यभिप्रेत्याह—**एशः आदिशित्त्वाभावादिति।**

**ञिष्विदेति।** षोपदेशोऽयम्। अनिट्सु स्विद्येति श्यन्विकरणस्यैव ग्रहणादयं सेट्। **रुच दीप्तावभिप्रीतौ चेति**। अभिप्रीतिः प्रीतिविषयीभवनम्। दीप्तौ उदाहरति—**रोचते सूर्य इति**। प्रकाशत इत्यर्थः। अभिप्रीतौ उदाहरति—**हरये रोचते भक्तिरिति।** भक्तिः हर्याश्रितप्रीतिविषयो भवतीत्यर्थः। 'रुच्यर्थानाम्' इति संप्रदानत्वाच्चतुर्थी। **क्षुभ संचलने इति**। क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ। णभधातुः णोपदेशः। नभते। **आद्योऽभावे चेति।** चात्संचलनेऽपि। तत्र अभावार्थकस्य प्रयोगं दर्शयति-**नभन्तामन्यके समे इति।** मन्त्रोऽयम्। नन्वत्र मन्त्रे णभेर्हिंसार्थकत्वमेव कुतो न स्यादित्यत आह—**मा भूवन्नन्यके सर्वे इति।** नभन्तामित्यस्य विवरणं–मा भूवन्निति। न भवन्तीत्यर्थः। समे इत्यस्य विवरणं—सर्वे इति। **निरुक्तमिति।** वेदव्याख्यानात्मको यास्कप्रणीतो ग्रन्थविशेषो निरुक्तम्। **स्रंसु ध्वंसु भ्रंसु इति।** त्रयो नोपधाः कृतानुस्वारनिर्देशाः। **ध्वंसु गतौ चेति।** चादवस्रंसनेऽपि। **अस्रसदिति।** द्युतादित्वात्परस्मैपदे अङि नलोप इति भावः। **नास्रसदिति।** नास्रंसदित्यपपाठः। नचास्रंसदिति लङो

१ रघुवंशे स. ४ श्लो० ४८।

ण्यादिस्तु प्रमादे गतः। वृतु ७५८ वर्तने। वर्तते ववृते। (२३४७) **वृद्भ्यः स्यसनोः** । १।३।९२॥ वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च। (२३४८) **न वृद्भ्यश्चतुर्भ्यः** । ७। २। ५९॥ एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वर्त्स्यति–वर्तिष्यते। अवृतत्–अवर्तिष्ट। अवर्त्स्यत्–अवर्तिष्यत। वृधु ७५९ वृद्धौ। शृधु ७६० शब्दकुत्सायाम्। इमौ वृतुवत्। स्यन्दू ७६१ प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे–सस्यन्त्से। सस्यन्दिध्वे। स्यन्दिता–स्यन्ता। 'वृद्भ्यः स्यसनोः' (सू २३४७) इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि

---

रूपमिति भ्रमितव्यम्। तत्र परस्मैपदासंभवात्। संभुधातुरकारमध्यः। **वृतु वर्तने इति**। उदित् ऋदुपधः सेट्कः। **वर्तते इति**। शपि गुणे रपरत्वम्। **ववृते इति**। असंयोगादिति कित्त्वाद्गुणाभावे द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे रूपम्। लुटि वर्तिता। **वृद्भ्यः**। बहुवचनाद्वृतादिभ्य इति गम्यते। शेषात्कर्तरीत्यतः परस्मैपदमित्यनुवर्तते, 'वा क्यषः' इत्यतो वेति च। तदाह—**वृतादिभ्य इति**। **न वृद्भ्यः**। सेऽसिचीति सूत्रात् से इति आर्धधातुकस्येडिति चानुवर्तते। तदाह—**एभ्यः सकारादेरिति**। **तङानयोरभावे इति**। गमेरिडित्यतः परस्मैपदेष्वित्यनुवृत्तम्। तेन च तङानयोरभावो लक्ष्यते, व्याख्यानादिति भावः। तेन जिगमिषिता इत्यत्र गमेः सन्नन्तात् तृचि इट् सिध्यति, वृतेः सन्नन्तात् हेर्लुकि विवृत्सइत्यत्र इण्निषेधश्च सिध्यति। **वर्त्स्यतीति**। लृटि स्यः। 'वृद्भ्यः स्यसनोः' इति परस्मैपदविकल्पः। 'न वृद्भ्यः' इति इण्निषेधः। गुणः रपरत्वम्। परस्मैपदाभावे त्वाह—**वर्तिष्यते इति**। तङानयोरभावे इत्युक्तेः 'न वृद्भ्यः' इति इण्निषेधो न। **अवर्तिष्टेति**। परस्मैपदस्य अङश्चाभावे रूपम्। **अवर्त्स्यदिति**। लृङि स्यः। 'वृद्भ्यः स्यसनोः' इति परस्मैपदम्। 'न वृद्भ्यः' इति इण्निषेधः, गुणः, रपरत्वमिति भावः। **अवर्तिष्यतेति**। परस्मैपदस्याभावे 'न वृद्भ्य' इति इण्निषेधोऽपि नेति भावः।

वृधु शृधु इति द्वौ ऋदुपधौ। तत्रापि 'द्युद्भ्यो लुङि' इति परस्मपदपक्षे द्युतादिलक्षणः अङ्। लृट्लृङोः 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे 'न वृद्भ्यः' इति इण्निषेधश्च। तदाह—**इमौ वृतुवदिति**। वर्त्स्यति–वर्धिष्यते। अवृधत्–अवर्धिष्ट। अवर्त्स्यत्–अवर्धिष्यत। शर्त्स्यति–शर्धिष्यते। अशृधत्—अशर्धिष्ट। अशर्त्स्यत्—अशर्धिष्यत। स्यन्दूधातुः ऊदित् नकारोपधः कृतानुस्वारपरसवर्णनिर्देशः। **सस्यन्दिषे सस्यन्त्से इति**। इडभावे दस्य चर्त्वेन तः। **सस्यन्दिद्ध्वे सस्यन्द्ध्वे इति**। इडभावे धकारात् प्राक् दकारः। खर्परकत्वाभावान्न चर्त्वम्। **स्यन्दिता स्यन्तेति**। इडभावे दस्य चर्त्वम्। ननु लृटि स्ये सति 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे परत्वादूदिल्लक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' इति इण्निषेधे *स्यन्त्स्यतीत्येव* रूपमिष्यते, ननु स्यन्दिष्यति इति। तदयुक्तम्, अन्तरङ्गतया ऊदिल्लक्षणस्यैव इड्विकल्पस्य उचितत्वात् सकारादिविशेषापेक्षतया तङाना-

विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यात् 'न वृद्भ्यः—' इति निषेधः। स्यन्त्स्यति-स्यन्दिष्यते-स्यन्त्स्यते। स्यन्दिषीष्ट-स्यन्त्सीष्ट। 'द्युद्भ्यो लुङि' (सू २३४५) इति परस्मैपदपक्षे अङ्। नलोपः। अस्यदत्-अस्यन्दिष्ट-अस्यन्त अस्यन्त्साताम् अस्यन्त्सत। अस्यन्त्स्यत्—अस्यन्दिष्यत—अस्यन्त्स्यत। (२३४६) **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु।** ८। ३। ७२॥ एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते-अनुस्यन्दते वा जलम्। अप्राणिषु किम्। अनुस्यन्दते हस्ती। अप्राणिषु इति पर्युदासात् मत्स्योदके अनुष्यन्देते

---

भावनिमित्तापेक्षतया च 'न वृद्भ्यः' इति निषेधस्य बहिरङ्गत्वादित्याशङ्क्य निराकरोति-**वृद्भ्य इति।** 'वृद्भ्यः स्यसनोः' इति परस्मैपदे कृते अन्तरङ्गमपि विकल्पं बाधित्वा न वृद्भ्यः इति निषेध इत्यन्वयः। कुत इत्यत आह—**चतुर्ग्रहणसामर्थ्यादिति**। यदि अत्र ऊदिल्लक्षण इड्विकल्प एव स्यात् नतु 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधः, तर्हि चतुर्भ्यः इति व्यर्थं स्यात्। नच कृपूव्यावृत्तिस्तत्फलमिति शङ्क्यम्, 'तासि च क्लृपः' इति चकारेण सकाराद्यार्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात्। तथा च चतुर्ग्रहणं चतुर्णामपि सर्वत्र इण्निषेधार्थमिति भावः।

भाष्ये तु 'निषेधाश्च बलीयांसः' इति न्यायेन अन्तरङ्गस्यापि ऊदिल्लक्षणेड्विकल्पस्य 'न वृद्भ्यः' इति निषेधेन बाधसिद्धेश्चतुर्ग्रहणं प्रत्याख्यातम्। तथा च लृटि परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यः' इहि नित्यमिण्निषेधे स्यन्त्स्यतीत्येकमेव रूपमिति स्थितम्। आत्मनेपदपक्षे तु ऊदित्त्वादिड्विकल्पं मत्वा आह—**स्यन्दिष्यते स्यन्त्स्यते इति।** इडभावे दस्य चर्त्वम्। आशीर्लिङि सीयुटि ऊदित्त्वादिड्विकल्पं मत्वा आह—**स्यन्दिषीष्ट स्यन्त्सीष्टेति।** 'न वृद्भ्यः' इति निषेधस्तु न, तङानयोरभाव एव तत्प्रवृत्तेरिति भावः। लुङि विशेषमाह—**द्युद्भ्यो लुङीत्यादिना। अङिति।** द्युतादिलक्षण इति शेषः। **नलोप इति।** अनिदितामित्यनेनेति शेषः। आत्मनेपदपक्षे तु अङभावादूदिल्लक्षणमिड्विकल्पं मत्वा आह—**अस्यन्दिष्ट अस्यन्त्तेति।** तत्र इडभावपक्षे अस्यन्द् स् त इति स्थिते 'झलो झलि' इति सलोपे दस्य चर्त्वम्। नचापित्त्वेन ङित्त्वात् 'अनिदिताम्' इति नलोपः शङ्क्यः, सिज्लोपस्यासिद्धत्वेनानुपधात्वादिति भावः। **अस्यन्त्साताम् अस्यन्त्सतेति।** अस्यन्त्थाः अस्यन्त्साथाम् अस्यन्द्ध्वम्। अस्यन्त्सि अस्यन्त्स्वहि अस्यन्त्स्महि। अस्यन्त्स्यत्—अस्यन्त्स्यत—अस्यन्दिष्यत। **अनुविपर्यभिनि। एभ्य इति।** अनु वि परि अभि नि इत्येतेभ्य इत्यर्थः। **सस्येति।** 'सेहः साडः सः' इत्यतः स इति षष्ठ्यन्तस्यानुवृत्तेरिति भावः। **षो वा स्यादिति।** 'अपदान्तस्य मूर्धन्यः' इत्यधिकारादिति भावः। ननु मत्स्योदके अनुष्यन्देते इत्यत्र कथं षत्वं प्राणिकर्तृकत्वस्यापि सत्त्वादित्यत आह—**अप्राणि-**

इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिषु न इत्युक्तौ तु न स्यात् । कृपू ७६२ सामर्थ्ये । (२३५०) कृपो रो लः । ८ । २ । १८॥ कृप उः रः लः इति छेदः। कृप इति लुप्तषष्ठीकम् । तच्चावर्तते । कृपो यो रेफस्तस्य लः स्यात् । कृपेर्ऋकारस्यावयवो यो रेफसदृशः तस्य च लकारसदृशः स्यात् । कल्पते । चक्लृपे । चक्लृपिषे—चक्लृप्से । इत्यादि स्यन्दिवत् । (२३५१) लुटि च क्लृपः । १ । ३ । ९३ ॥ लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् । (२३५२) तासि च क्लृपः । ७ । २ । ६० ॥ क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य

---

ष्विति पर्युदासादिति । प्राणिकर्तृकस्य नेति न प्रतिषेधः, येनात्र प्राणिकर्तृकत्वस्यापि सत्त्वात् षत्वं न स्यात् । किन्तु प्राणिभिन्नकर्तृकस्येति पर्युदास आश्रीयते । एवंच प्राण्यप्राणिकर्तृकस्यापि अप्राणिकर्तृकत्वानपायादिह षत्वं निर्बाधमिति भावः ।

कृपू सामर्थ्ये इति । सामर्थ्यं कार्यक्षमीभवनम् । ऊदित्त्वाद्वेट्कोऽयम् । ऋदुपधः । तङि प्रथमपुरुषैकवचनस्य टेरेत्वे शपि लघूपधगुणे रपरत्वे कर्पते इति स्थिते—कृपो रो लः । कृप इति लुप्तविभक्तिकम् । षष्ठ्येकवचने उः इति ऋकारस्य रूपम् । अवयवषष्ठी । कृप उरिति स्थिते आद्गुणे कृपोरिति भवति । र इति षष्ठ्यन्तम् । कृपोर् रः इति स्थिते ' रो रि ' इति रेफलोपे कृपो रः इति भवति । लः इति प्रथमान्तम् । अकारः उच्चारणार्थः । तदाह—कृप उः रः लः इति छेद इति । एतच्च ऋलृक्सूत्रभाष्ये स्थितम् । ननु कृपेत्यत्र का विभक्तिर्लुप्तेत्यत आह—कृप इति लुप्तषष्ठीकमिति । पकारादकार उच्चारणार्थः । कृप्धातोरिति लभ्यते । तच्चावर्तते इति । कृप रः लः इति पदत्रयमावर्तत इत्यर्थः । तथाच वाक्यद्वयं संपद्यते—कृप रः लः इत्येकं वाक्यम् । तदाह—कृपो यो रेफस्तस्य लः स्यादिति । तथाच कल्पते इति भवति । कृप उः रः लः इति द्वितीयं वाक्यम्। तत्र कृपेत्यवयवषष्ठ्यन्तम् उरित्यत्रान्वेति । उरित्यवयवषष्ठ्यन्तं रेफे अन्वेति । तथाच कृप्धातोरवयव यः ऋकारः तस्य यो रेफः तस्य लकारः स्यादिति लभ्यते । तत्र ऋकारावयवत्वं रेफस्य न संभवतीति रेफशब्दो रेफसदृशे ऋकारांशे लाक्षणिकः । ल इत्यपि लकारसदृशे लृकारांशे लाक्षणिकः । तदाह—कृपेर्ऋकारस्यावयव इत्यादिना । एवं च लिटि चकृप् ए इति स्थिते कित्त्वाद्गुणाभावे ऋकारैकदेशस्य रेफसदृशस्य लकारसदृशे सति चक्लृपे इति रूपम् । कृपः रः लः इति छेदमभ्युपगम्य कृपधातोः रेफस्य लकार इति व्याख्याने तु चक्लृपे इति न सिध्येत् । तदर्थमावृत्तिराश्रितेत्यभिप्रेत्याह—कल्पते चक्लृपे इति । ऊदित्त्वादिड्विकल्पं मत्वा आह—चक्लृपिषे चक्लृप्से इति । स्यन्दिवदिति । चक्लृपाथे चक्लृपिध्वे—चक्लृब्ध्वे । चक्लृपे चक्लृपिवहे—चक्लृप्वहे चक्लृपिमहे—चक्लृप्महे ।

चेदन स्यात्तङानयोरभावे । कल्तासि । कल्तास्थ । कल्पितासे—कल्तासे । कल्प्स्यति—कल्पिष्यते—कल्प्स्यते । कल्पिषीष्ट-क्लृप्सीष्ट । अक्लृपत्—अकल्पिष्ट—अक्लृप्त—अकल्पिष्यत—अकल्प्स्यत । वृत् । वृत्तः संपूर्णो घुतादिर्वृतादिश्चेत्यर्थः ।

अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च । घट ७६३ चेष्टायाम् । घटते । जघटे । 'घटादयो मितः' इति वक्ष्यमाणेन मित्संज्ञा । तत्फलं तु णौ मितां ह्रस्वः' ( सू २५६८ ) इति 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' ( सू २७६२ )

---

**लुटि च क्लृपः** । चकारात् 'वृद्भ्यः स्यसनोः' इत्यतः स्यसनोरित्यनुकृष्यते । 'शेषात्कर्तरि' इत्यतः परस्मैपदमिति । 'वा क्यषः' इत्यतो वेति च । तदाह—**लुटि स्यसनोरित्यादिना** । **तासि च** । चकारात्सकाराद्यार्धधातुकं गृह्यते । 'सेऽसिचि कृत' इत्यतः से इति 'आर्धधातुकस्य' इत्यतः आर्धधातुकस्येडिति चानुवर्तते । 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेति च । 'गमेरिडि'त्यतः परस्मैपदमिति च । तदाह-**क्लृपेः परस्येत्यादिना** । **कल्तासीति** । 'लुटि च क्लृपः' इति परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'तासि च क्लृपः' इति इण्निषेधे गुणे रपरत्वे लत्वे रूपम् । परस्मैपदाभावपक्षे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह—**कल्पितासे कल्तासे इति** । लृटि तु 'लुटि च क्लृपः' इति परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा 'तासि च क्लृपः' इति इण्निषेधं मत्वा आह—**कल्प्स्यतीति** । परस्मैपदाभावे तु ऊदित्त्वादिड्विकल्पं मत्वा आह—**कल्पिष्यते कल्प्स्यत इति** । कल्पताम् । अकल्पत । कल्पेत । आशीर्लिङि ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-**कल्पिषीष्टेति, क्लृप्सीष्टेति च** । इडभावे 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । **अक्लृपदिति** । 'द्युद्भ्यो लुङि' इति परस्मैपदपक्षे द्युतादिलक्षणे अङि सति ङित्त्वान्न गुणः । अङभावे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह—**अकल्पिष्टेति, अक्लृप्तेति** । **अकल्प्स्यदिति** । लृङि स्ये 'लुटि च क्लृप' इति परस्मैपदपक्षे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह—**अकल्पिष्यत अकल्प्स्यतेति** । **वृदिति** वृतेः समाप्त्यर्थकात् कर्तरि क्विप् । तदाह—**वृत्तः इति** । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । वृत्तशब्दस्य विवरणं—**सम्पूर्ण इति** । द्युतादयः कृपूपर्यन्ता अनुदात्तेतो गताः ।

**अथ त्वरत्यन्ता इति** । ञि त्वरा संभ्रमे इत्यन्ता इत्यर्थः । **षितश्चेति** । षित्संज्ञका इत्यर्थः । षित्कार्यभाज इति वा । ञि त्वरा संभ्रमे इत्युक्त्वा घटादयः षितः इति वक्ष्यमाणत्वादिति भावः । षित्फलं तु स्त्रियामित्यधिकारे 'षिद्भिदादिभ्यः' इत्यङ् । घटा व्यथा इत्यादि रूपम् । **घटते इति** । चेष्टते इत्यर्थः ।

इति च वक्ष्यते । घटयति । विघटयति । कथं तर्हि 'कमलवनोद्घाटनं कुर्वते ये' प्रविघाटयिता समुत्पतन्हरिदश्वः कमलाकरानिव' इत्यादि । शृणु । घट सङ्घाते इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम् । 'नान्ये मितोऽहेतौ' इति निषेधात् । अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकस्यति-

---

तत्फलं त्विति । मित्त्वफलं तु 'मितां ह्रस्वः' इति णौ ह्रस्वः, 'चिण्णमुलो-र्दीर्घः' इति दीर्घश्च वक्ष्यते । धातुपाठे अर्थनिर्देशः उपलक्षणमित्युक्तम् । ततश्चार्था-न्तरवृत्तेरपि घटधातोर्घटादिकार्यं भवत्येव । तदाह—घटयति विघटयतीति । संश्लेषयति विश्लेषयतीत्यर्थः । णौ ह्रस्वोदाहरणमिदम् । अघटि अघाटीनि चिण्णु-दाहरणम् । घाटंघाटम्, घटंघटमिति णमन्तारणमुलि दीर्घविकल्पस्योदाहरणम् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । ननु यद्यर्थान्तरवृत्तेरपि घटधातोर्मित्त्वं, तदा उद्घाटनं प्रविघाटयितेत्यत्र विकसनार्थकस्यापि घटधातोर्णौ मित्त्वाद्ध्रस्व. स्यादि-त्याक्षिपति—कथं तर्हीति । शृणिवति । समाधानमिति शेषः । चौरादिक-स्येति । चुरादौ 'घट संघाते' इति पठितम् । तदिदं घाटादिकात् घट-धातोर्धात्वन्तरमेव । तस्य णौ मित्त्वाभावात् ह्रस्वाभावे उद्घाटनं प्रविघाटयितेति निर्बाधमेव, अर्थनिर्देशस्योपलक्षणतया संघातादन्यत्र विकासनेऽपि चौरादिकस्य वृत्तिसंभवादिति भावः ।

ननु घटादिगणादन्यत्र अर्थान्तरे पठितानां धातूनामिह घटादिगणे पाठः घटा-दिगणनिर्दिष्ट एवार्थे मित्त्वार्थोऽनुवाद एव, नतु धातुभेदः । अन्यथा घाटादिकत्वं ग णान्तरस्थत्वं चादाय मित्त्वतदभावयोर्विकल्पापत्तेः । ये तु धातवो घटादिगण एव पठिताः नतु गणान्तरे, तेषां त्वर्थान्तरवृत्तावपि मित्त्वमिति धातुवृत्त्यादिग्रन्थेषु सिद्धान्तः । घटधातुस्तु घट संघाते इति चुरादौ पठितः । अतस्तस्यैवात्र गणे चेष्टा-यामर्थे मित्त्वार्थोऽनुवाद इति लब्धम् । एवंच विघटयति इत्यादावर्थान्तरवृत्तौ णयन्तस्य कथं मित्त्वमित्याशङ्क्य निराकरोति—नचेति । तस्यैव चौरादिकस्यैव घटधातोः चेष्टात्मके अर्थविशेषे वृत्तौ मित्त्वार्थोऽनुवादः स्यादिति न वाच्यमित्यर्थः । कुत इत्यत आह—नान्ये मितोऽहेताविति । चुराद्यन्तर्गणसूत्रमिदम् । तत्र हि 'ज्ञप मिच्च' 'यम च परिवेषणे' 'चह परिकल्कने' 'रह त्यागे' 'बल प्राणने' 'चिञ् चयने' इति पञ्च धातून् पठित्वा 'नान्ये मितोऽहेतौ' इति पठितम् । तत्र चह परिकल्कने इत्यस्य स्थाने चपेति केचित् पठन्ति । तथाच पञ्चत्वस्य न विरोधः । एषु पञ्चस्वपि मिदित्यनुवर्तते । अहेताविति च्छेदः । कस्मादन्ये इत्यपेक्षायां संनिहितत्वात् ज्ञपादि-पञ्चभ्य इति लभ्यते । हेतुशब्देन 'हेतुमति च' इति सूत्रविहितो णिच् लभ्यते । तद्भिन्नो णिच् स्वार्थिकः अहेतुः । तदाह—अहेतौ स्वार्थे णिचीति । ज्ञपः

---

१ किरातार्जुनीय स. २ श्लो ४६ ।

रिक्ताः चुरादयो मितो नेत्यर्थः । व्यथ ७६४ भयसञ्चलनयोः । व्यथते । (२३५३) **व्यथो लिटि** । ७ । ४ । ६८ ॥ व्यथोऽभ्यासस्य संप्रसारणं स्या-ल्लिटि । हलादिशेषापवादः । थस्य हलादिशेषेण निवृत्तिः । विव्यथे । प्रथ ७६५ प्रख्याने । पप्रथे । प्रस ७६६ विस्तारे । पप्रसे । म्रद ७६७ मर्दने । स्खद ७६८ स्खदने । स्खदनं विद्रावणम् । क्षजि ७६९ गतिदानयोः मित्त्व-सामर्थ्यादनुपधात्वेऽपि 'चिण्णमुलोः–' ( सू २७६२ ) इति दीर्घविकल्पः । अक्षजि–अक्षाजि । क्षञ्जंक्षञ्जम् । क्षाञ्जंक्षाञ्जम् । दक्ष ७७० गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः । क्रप ७७१ कृपायां गतौ । कदि ७७२ क्रदि ७७३ क्लदि ७७४ वैक्लव्ये । वैकल्ये

---

आदिर्येषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः । ज्ञपधातोस्तदुत्तरेभ्यश्च पञ्चभ्य इत्येवं षड्भ्योऽन्ये ये चुरादयः ते मितो नेति फलितम् । एवं च चुरादौ ज्ञपादिपञ्चकव्य-तिरिक्तानां मित्त्वाभावात् ' घट चेष्टायाम् ' इति निर्देशश्चौरादिकस्य 'घट संघाते' इत्यस्य चेष्टायां वृत्तौ मित्त्वार्थोऽनुवाद इति न युज्यते । किंतु इहैव घटादिगणे 'घट चेष्टायाम्' इत्यपूर्वोऽयं धातुः । तस्य चार्थान्तरवृत्तावपि मित्त्वमस्त्येवेति विघटयती त्यादौ मित्त्वाद्ध्रस्वो निर्बाध इति भावः ।

व्यथधातुर्द्वितीयान्तः । **व्यथो लिटि** । 'अत्र लोपः' इत्यतः अभ्यासस्येति 'द्युतिस्वाप्योः' इत्यतः संप्रसारणमिति चानुवर्तते । तदाह—**व्यथोऽभ्यासस्ये-त्यादिना । हलादिशेषापवाद इति** । व्यथ् व्यथ् ए इति स्थिते हलादिशेषलभ्यं यकारस्य लोपं बाधित्वा संप्रसारणमित्यर्थः । तथाच यकारस्य इकारे पूर्वरूपे विव्यथे इति रूपम् । वकारस्य तु न संप्रसारणम्, 'न संप्रसारणे संप्रसारणम्' इति निषेधात्। ननु संप्रसारणेन हलादिशेषबाधे थकारस्यापि निवृत्तिर्न स्यादित्यत आह—**थस्येति।** यकारलोपस्य बाधं विना संप्रसारणस्य प्रवृत्त्यनुपपत्तेस्तेन तद्बाधेऽपि थकारलोपस्य बाधे प्रमाणाभावादिति भावः । **म्रद मर्दने इति** । म्रदुपधोऽयम् । मर्दते । मम्रदे। क्षजिधातुरिदित् क्षञ्जते । चक्षञ्जे । ननु घटादिगणे अस्य पाठो व्यर्थः, क्षञ्जयती-त्यत्र णौ नुमि कृते अकारस्यानुपधात्वेन उपधादीर्घस्याप्रसक्त्या 'मितां ह्रस्वः' इत्यस्याप्रवृत्तावपि विशेषाभावात् अनुपधात्वेन 'मितां ह्रस्वः' इत्यस्य प्रसक्त्यभावाच्च । अत एव अक्षञ्जि क्षञ्जं क्षञ्जमित्यत्रापि 'चिण्णमुलोः इति दीर्घविकल्पस्यापि न प्रसक्तिरित्यत आह—**मित्त्वसामर्थ्यादिति । दक्ष गताविति ।** ननु 'दक्ष वृद्धौ शीघ्रार्थे च' इत्यनुदात्तेत्सु पाठादेव सिद्धे किमर्थमिह पाठः? अर्थनिर्दे-शस्योपलक्षणत्वादेव गतिहिंसार्थकत्वस्यापि संभवादित्यत आह—**वृद्धिशैघ्र्ययो-रिति** । मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोर्दीर्घविकल्पः । अदक्षि अदाक्षि। दक्षंदक्षम् दाक्षंदाक्षम् । **क्रप कृपायां गताविति** । अदुपधोऽयम् । कृपायां गतौ चेत्यर्थः । कदि क्रदि क्लदि इति नन्दिमते । क्षीरस्वामिमते च त्रय एव धातवः ।

इत्येके। अयोऽप्यनिदितः इति नन्दी। इदितः इति स्वामी। कदिक्रदी इदितौ, क्रद क्लद इति चानिदिताविति मैत्रेयः। कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थं आत्मनेपदार्थश्च। ञि त्वरा ७७५ संभ्रमे। 'घटादयः षितः' ( ग सू १८६ )। षित्त्वादङ् कृत्सु वक्ष्यते।

अथ फणान्ताः परस्मैपदिनः। ज्वर ७७६ रोगे। ज्वरति। जज्वार। गड ७७७ सेचने। गडति। जगाड। हेड ७७८ वेष्टने। हेडृ अनादरे इत्यात्मनेपदिषु गतः। स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्। हेडति। जिहेड। हिडयति। अहिडि-अहीडि। अनादरे तु हेडयति। वट ७७९ भट ७८० परिभाषणे। वट वेष्टने, भट भृतौ इति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः। णट ७८१ नृत्तौ। इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वं

---

मैत्रेयमते चत्वार इति बोध्यम्। तत्र इदितां त्रयाणां पौनरुक्त्यं परिहरति—**कदिक्रदिक्लदीनामित्यादिना। ञि त्वरेति।** ञिरित्। 'ञीतः क्तः' इति क्तः प्रयोजनम्। आदित्त्वं तु 'आदितश्च' इति निष्ठायामिण्निषेधार्थम्। वस्तुतस्तु आदित्त्वं व्यर्थम्, ह्रस्वेऽप्यात्मनेपदसिद्धेः 'रुष्यमत्वरसंघुषास्वनाम्' इति निष्ठायामिड्विकल्पसिद्धेश्च। **घटादयः षित इति।** त्वरत्यन्ता इति शेषः। गणसूत्रमिदम्। तत्प्रयोजनमाह—**षित्त्वादिति। वक्ष्यते इति।** 'षिद्भिदादिभ्योऽङ्' इत्यनेनेति शेषः। घटादिषु त्रयोदशानुदात्तेतो गताः। घुत दीप्तौ इत्यतः प्राक् घटादिसमाप्तिरिति वक्ष्यते।

**अथ फणान्ता इति।** फण गतावित्येतत्पर्यन्ता इत्यर्थः। **ज्वर रोगे इति।** णौ ज्वरयति। चिणि तु अज्वरि-अज्वारि। णमुलि तु ज्वरंज्वरं ज्वारंज्वारम्। एवमग्रेऽपि ज्ञेयम्। **हेड वेष्टने इति।** डकारादकार उच्चारणार्थः। ततश्च 'नाग्लोपिशास्वृदिताम्' इति निषेधो न भवति। **स एवेति।** हेडृधातुरेव ऋकारानुबन्धमुत्सृज्य वेष्टनरूपे अर्थविशेषे मित्त्वार्थमनूद्यते इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। नन्वात्मनेपदिन एवात्रानुवादे परस्मैपदं न स्यादित्यत आह—**परस्मैपदिभ्य इति।** यदि त्वात्मनेपदमिष्टं तर्हि घटादिषु त्वरत्यन्तेष्वेवानुदात्तेत्सु पठ्येतेति भावः। **हेडतीति।** वेष्टते इत्यर्थः। **हिडयतीति।** वेष्टयतीत्यर्थः। 'हेतुमति' इति णिचि 'मितां ह्रस्वः' इति ह्रस्व इति भावः। **अहिडि अहीडीति।** 'चिण्णमुलोः' इति दीर्घविकल्पः। **अनादरे तु हेडयतीति।** वेष्टनरूपार्थ एव मित्त्वान्न ह्रस्व इति भावः। 'वट परिभाषणे' इति नापूर्वो धातुरित्याह—**वट वेष्टने इत्यादि। अनुवाद इति।** धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः।

'णट नृत्तौ' इत्यस्य पौनरुक्त्यमाक्षिपति—**इत्थमेव पूर्वमपि पठितमिति।**

पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्तं नृत्यं चार्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ णट नतौ इति पठन्ति। गतौ इत्यन्ये। णोपदेशपर्युदासवाक्ये भाष्यकृता 'नाटि' इति दीर्घपाठाद्घटादिर्णोपदेश एव। ष्टक ७८२ प्रतीघाते। स्तकति। चक ७८३ तृप्तौ। तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम्। कखे ७८४ हसने। एदित्त्वान्न वृद्धिः। अकखीत्। रगे ७८५ शङ्कायाम्। लगे ७८६ सङ्गे। ह्रगे ७८७ ह्लगे ७८८ षगे ७८९ ष्टगे ७९० संवरणे। कगे ७९१ नोच्यते। अस्यायमर्थः इति विशिष्य नोच्यते। क्रियासामान्यार्थत्वात्। अनेकार्थत्वादित्यन्ये। अक ७९२ अग ७९३ कुटिलायां गतौ। कण ७९४ रण ७९५ गतौ। चकाण। रराण। चण ७९६ शण ७९७

---

टवर्गान्तेष्विति शेषः। तथा च उभयोरप्यर्थैक्येन अर्थविशेषे मित्त्वार्थमिहानूद्यते इति परिहारस्यासंभवात्पौनरुक्त्यमेवेति भावः। परिहर्तुमुपक्षिपति—**तत्रायं विवेक इति**। तत्र तयोः धात्वोः अयं वक्ष्यमाणः विवेकः अर्थभेदः प्रत्येतव्य इत्यर्थः। **पूर्वं पठितस्येति**। टवर्गान्तेषु पठितस्येत्यर्थः। **यत्कारिष्विति**। यस्य कर्तृषु नटव्यवहारः तन्नाट्यं पूर्वं पठितस्य नटधातोरर्थ इत्यर्थः। किं तन्नाट्यमित्यत्राह—**वाक्यार्थेति**। **घटादौ त्विति**। यस्य कर्तृषु नर्तकव्यपदेशः तत् नृत्यं, नृत्तं च घटादौ पठितस्य नटेरर्थ इत्यर्थः। नृत्यनृत्तयोः को भेद इत्यत आह—**पदार्थेति**। एवंच टवर्गान्तेषु पठितस्य घटादिगतस्य चार्थभेदसत्त्वादर्थविशेषे मित्त्वार्थोऽनुवाद इति युज्यते। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। अथ नटधातोरस्य णोपदेशपर्युदासभ्रमं वारयति—**णोपदेशेति**। अनर्द्नाटीत्यादिपर्युदासवाक्ये नाटीति णिज्लक्षणवृद्धिनिर्देशेन 'नट अवस्कन्दने' इति चौरादिकस्यैव ग्रहणादयं णोपदेश एवेत्यर्थः। ष्टकधातुः षोपदेशः। कृतष्टुत्वस्य निर्देशः। **स्तकतीति**। 'धात्वादेः' इति षस्य सत्वे ष्टुत्वनिवृत्तिः। **चक तृप्तौ। तृप्तीति**। 'चक तृप्तौ प्रतीघाते च' इत्यात्मनेपदिषु पठितस्य तृप्तावर्थे मित्त्वार्थोऽत्रानुवाद इत्यर्थः। एवंच धात्वन्तरत्वाभावान्न मित्त्वतदभावविकल्पः। ननु आत्मनेपदिषु पठितस्यात्रानुवादादात्मनेपदं स्यादित्यत आह—**आत्मनेपदिष्विति। षगे ष्टगे इति**। षोपदेशौ। ष्टगे इति कृतष्टुत्वनिर्देशः। **कगे नोच्यत इति**। ननु कगे इत्यनेन यदि किमपि नोच्येत, तर्हि कथमस्य धातुत्वमित्यत आह—**अस्यायमिति**। क्रियाविशेषो नास्यार्थ इति भावः। ननु यदि न कोऽपि क्रियाविशेषोऽस्यार्थः, तर्हि कथमयं धातुरित्यत आह—**क्रियासामान्यार्थवाचित्वादिति**। धातुपाठपठितस्य क्रियाविशेषार्थकत्वाभावे सति क्रियासामान्यवाचित्वं परिशेषलभ्यमिति भावः। **अनेकेति**। कलिः कामधेनुरिति

श्रण ७९८ दाने च । शण गतौ इत्यन्ये । श्रथ ७९९ श्लथ ८०० क्नथ ८०१ क्रथ ८०२ हिंसार्थाः । 'जासिनिप्रहण—' ( सू ६१७ ) इति सूत्रे क्राथेति मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्त्वं तु निपातनात्परत्वात् 'चिण्णमुलोः' (सू २७६२) इति दीर्घे चरितार्थम् । अक्रथि-अक्राथि । क्रथंक्रथम् । क्राथंक्राथम् । वन ८०३ च । हिंसायामिति शेषः । वनु च नोच्यते । वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः । उदित्करणसामर्थ्यात् । तेन क्रियासामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते ।

न्यायेन कलधातुवदपरिमितार्थकत्वमिति भावः ।

**श्रथ क्नथ क्रथ क्लथ इति ।** चत्वारोऽपि द्वितीयान्ताः । आद्यतृतीयौ रेफमध्यौ । द्वितीयो नकारमध्यः । चतुर्थस्तु लकारमध्यः । आद्यस्तु शकारादिः । इतरे ककारादयः । ननु क्रथधातोर्घटादित्वेन मित्त्वात् णौ उपधावृद्धिसंपन्नस्य आकारस्य 'मितां ह्रस्वः' इति ह्रस्वत्वे क्रथयतीति स्यात्, नतु क्राथयतीति । तत्राह—**जासिनीति** । 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इति षष्ठीविधौ णौ मित्त्वेऽपि क्राथेति वृद्धिर्निपात्यत इत्यर्थः । नन्वेवं सति घटादौ क्रथधातोः पाठो व्यर्थ इत्यत आह—**मित्त्वं त्विति** । चिण्णमुलोर्दीर्घपक्षे चरितार्थमित्यन्वयः । ननु तत्रापि क्राथेति निपातनाद्वृद्धिरित्यत आह—**निपातनात्परत्वादिति** । क्राथेति निपातनापेक्षया चिण्णमुलोरित्यस्य परत्वादित्यर्थः । यद्यपि 'मितां ह्रस्वः' इत्यपि परम् । तथापि पुरस्तादपवादन्यायेन क्राथेति वृद्धिनिपातनं 'मितां ह्रस्वः' इत्यस्यैवाव्यवहितस्य बाधकं, नतु चिण्णमुलोरित्यस्यापि, तस्य व्यवहितत्वादिति बोध्यम् । **अक्रथि-अक्राथीति ।** क्रथेर्ण्यन्ताच्चिणि दीर्घविकल्पः । **क्रथंक्रथं क्राथंक्राथमिति ।** णमुलि दीर्घविकल्पः । **वन चेति ।** चकारो हिंसानुकर्षकः । तदाह—**हिंसायामितीति । शेष इति ।** वन शब्दे, वन संभक्ताविति पठितस्य हिंसायां मित्त्वार्थोऽत्रानुवादः । वनति । णौ तु वनयति । णमुलि तु वनंवनं वानंवानम् ।

**वनु च नोच्यते इति ।** कर्मणि नोच्यते इतिवद्व्याख्येयम् । नन्वन्यत्र पठितस्य घटादौ मित्त्वार्थोऽनुवाद इति सिद्धान्तात्तनादौ 'वनु याचने' इति पठितस्य अनुदात्तेतोऽत्रानुवादात् क्रियासामान्येऽर्थे वनुते इत्यात्मनेपदम् उप्रत्ययश्च स्यादित्यत आह—**अपूर्व एवायमिति । उदित्करणेति ।** यदि तानादिकस्यैव अत्रानुवादः स्यात्, तर्हि तनादिगणे वनु इति कृतेन उदित्करणेनैव 'उदितो वा' इत्याद्युदित्कार्यस्य सिद्धेरिह गणे पुनरुदित्करणमनर्थकं स्यात् । अतस्तानादिकस्य नात्रानुवादः, किं त्वपूर्व एवायं वनुधातुः । तथा च वनतीति परस्मैपदं शब्विकरणं चेत्याह—**तेन क्रियासामान्ये वनतीत्यादीति ।** आदिना वनतः वनन्तीत्यादिसंग्रहः । **प्रवनयतीति ।** घाटादिकस्य क्रियासामान्यवाचिनो णिचि मित्त्वाद्-

१ अत्र टीकाकारः 'क्लथ' धातुभङ्गी करोति, परन्तु तद्धातुपाठादि विरुद्धं भाति ।

ज्वल ८०४ दीप्तौ । णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते । प्रज्वलयति । ह्वल ८०५ ह्मल ८०६ चलने । प्रह्वलयति । प्रह्मलयति । स्मृ ८०७ आध्याने । चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । दॄ ८०८ भये । दॄ विदारणे इति क्र्यादेरयं मित्त्वार्थोऽनुवादः । हणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । धात्वन्तरमेवेदमिति मते तु दरतीत्यादि । केचिद्घटादौ 'अत्स्मृदृत्वर-' (सू २५६६) इति सूत्रे च दृ इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति माधवः । नॄ ८०९ नये । क्र्यादिषु पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति । श्रा ८१० पाके । श्रै

---

ध्रस्वः । **वच्यत इति** । 'ग्लास्नावनुवमां च' इत्यनेनेति शेषः । तानादिकात्तु वनु याचने इत्यस्माण्णिचि उपधादीर्घे वानयतीत्येव भवति । **ज्वल दीप्तौ । णप्रत्ययार्थमिति** । 'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्ययार्थं ज्वलादिगणे पठिष्यमाणस्य इह मित्त्वार्थोऽनुवाद इत्यर्थः । ज्वलतीत्यादि सिद्धवत्कृत्य मित्त्वस्य णौ ह्रस्वं प्रयोजनमाह—**प्रज्वलयतीति** । धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति बोध्यम् ।

**स्मृ आध्याने । चिन्तायामिति** । स्मृ चिन्तायामिति पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवाद इत्यर्थः । चिन्ताया आध्यानमन्यदिति दर्शयितुमाह—**आध्यानमुत्कण्ठेति । दॄ भये इति** । अस्य दृणातीति रूपं नतु शप् । तदाह—**क्र्यादेरयं मित्त्वार्थोऽनुवाद इति** । भयेऽर्थे मित्त्वार्थमिति शेषः । अर्थनिर्देशस्य उपलक्षणत्वात् भये वृत्तिः । तथाच क्र्यादित्वात् श्नाविकरण एवायमिति भावः । मित्त्वप्रयोजनं दर्शयति—**हणन्तं प्रेरयति दरयतीति** । भीषयतीत्यर्थः । **भयादन्यत्र दारयतीति** । भेदयतीत्यर्थः । **धात्वन्तरमेवेति** । नतु क्र्यादेरनुवाद इत्यर्थः । अस्मिन्मते भौवादिकत्वात् शबेवेत्याह—**दरतीत्यादीति । सूत्रे चेति** । 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इति अत्वविधावित्यर्थः । **ह्रस्वं पठन्तीति** । तन्मते क्र्यादेरनुवादप्रसक्तिरेव नास्तीति भावः । **तन्नेतीति** । यदि ह्ययं घटादौ ह्रस्वान्तः क्र्यादौ तु दीर्घान्तो भवेत् तर्हि 'शॄदॄप्रां ह्रस्वो वा' इत्यत्र दॄग्रहणमनर्थकं स्यात् । ह्रस्वदीर्घान्तधातुभ्यामेव तत्फलसिद्धेरिति भावः । **नॄ नये इति** । नयः नयनम् । **क्र्यादिष्विति** । नॄ नये इत्येव क्र्यादिषु पठ्यते । तत्रार्थनिर्देशो न विवक्षितः । क्र्यादिषु पठिष्यमाणस्य नॄधातोर्नयादन्यत्र विद्यमानस्य नयेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः । तथाच श्नाविकरण एवायम् । नृणातेर्धात्वन्तरत्वाभावान्न मित्त्वतदभावौ । अपि तु नित्यमेव मित्त्वम् ।

**श्रा पाके इति** । नन्वत्र भ्वादौ पठ्यमानाच्छ्रायतेः, उत्तरत्र अदादौ पठिष्यमाणाच्च श्रातेरन्य एव यदि कश्चन स्वतन्त्रो धातुर्घटादौ निर्दिश्येत तदा प्रकृते लटि शपि श्रातीति रूपसंपत्त्या लुग्विकरणस्थेन श्रा पाके इत्यनेन पौनरुक्त्यमित्यत

इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम्। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' ( प ९१ ), 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' ( प ११४ ) इति परिभाषाभ्याम्। श्रपयति। विक्लेदयतीत्यर्थः। पाकादन्यत्र श्रापयति। स्वेदयतीत्यर्थः। मारणतोषणनिशामनेषु ज्ञा ८११। निशामनं चाक्षुषज्ञानम् इति माधवः। ज्ञापनमात्रम् इत्यन्ये। निशानेषु इति पाठान्तरम्। निशानं तीक्ष्णीकरणम्। एष्वेवार्थेषु जानातिर्मित्। ज्ञप मिच्च

---

आह—**श्रै इतीति**। अग्रे भ्वादिगणे श्रै पाक इति पठिष्यते। तस्य कृतात्वस्यानुकरणमित्यन्वयः। तथाच तस्यैव श्रैधातोरनेकार्थकतया पाके वृत्तस्य मित्त्वार्थमत्रानुवादात् शपि श्रायतीत्यादि रूपम्। एतच्च 'श्रतं पाके' इइि सूत्रे भाष्यकैयटयोः स्थितम्। एवं च सति संभवे अन्यत्र पठितानामिह मित्त्वार्थोऽनुवाद इति सिद्धान्तादग्रे भ्वादौ श्रै पाके इत्यस्य पौनरुक्त्यं न शङ्क्यम्। नन्वेवं सति 'श्रै पाके' इत्येवात्र कुतो न पठितमित्यत आह—**श्रा इत्यादादिकस्य चेति**। ननु लाक्षणिकत्वात् 'श्रै पाके' इति भौवादिकस्य कृतात्वस्याप्यनुवाद इति न युज्यत इत्यत आह—**लुग्विकरणेत्यादि परिभाषाभ्यामित्यन्तम्**। परिभाषाभ्यामुभयोरनुकरणमित्यन्वयः। 'स्वरतिसूतिसूयति' इति सूत्रे सू इति पठितेऽपि द्वयोर्ग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं 'लुग्विकरण' इति परिभाषां ज्ञापयतीत्याहुः। प्रतिपदोक्तपरिभाषा तु न्यायसिद्धेत्युक्तमेव। **श्रपयतीति**। श्रैधातोर्णिचि 'आदेच उपदेशे' इत्यात्वे 'अर्तिह्री' इति पुकि मितां ह्रस्वः। श्राधातोस्तु स्वत एवाऽऽदन्तत्वाण्णिचि पुकि ह्रस्वः। **पाकादन्यत्रेति**। अर्थनिर्देशस्योपलक्षणत्वादिति भावः।

**मारणेति**। मारणे तोषणे निशामने च ज्ञाधातुर्वर्तत इत्यर्थः। अक्षतस्य मारणे संपूर्वकस्यैव ज्ञाधातोः प्रयोगः। **चाक्षुषज्ञानमिति**। निपूर्वकात् शम आलोचने इत्यस्मात् चौरादिकण्यन्तात् ल्युटि निशामनशब्दस्य निष्पत्तेरिति भावः। **ज्ञापनमात्रमिति**। उपसर्गवशादिह ज्ञापने वृत्तिः, चाक्षुषत्वं च ज्ञानस्य न विवक्षितमिति भावः। **निशानेष्विर्तीति**। 'मारणतोषणनिशानेषु ज्ञा' इति पाठान्तरमित्यर्थः। ननु ज्ञाधातोरस्माल्लडादौ शपि 'ज्ञाजनोर्जा' इति जादेशे जाति जातः इत्यादि स्यादित्यत आह—**एष्वेवेति**। ज्ञा अवबोधने इति श्नाविकरणस्यैव मारणादिष्वर्थेषु णौ मित्त्वार्थमिहानुवादात् श्नाविकरण एवायमिति भावः। जानातेः मित्त्वफलं तु णौ ह्रस्वः—पशुं संज्ञपयति अक्षतं मारयतीत्यर्थः। हरिं ज्ञापयति। संतोषयतीत्यर्थः। रूपं ज्ञपयति माधवमते दर्शयतीत्यर्थः। मतान्तरे तु बोधयतीत्यर्थः। शरं ज्ञपयति तीक्ष्णीकरोतीत्यर्थः। ननु माधवमते बोधयतीत्यर्थे ज्ञपयतीति कथं मित्त्वम्, तन्मते चाक्षुषज्ञानस्यैव निशामनशब्दार्थत्वादित्यत आह-**ज्ञप मिच्चेति चुरादाविति**। एवंच चौरादिकं ज्ञाधातुमादाय बोधनेऽप्यर्थे ज्ञपयतीति ह्रस्वः संगच्छते इति भावः।

इति चुरादौ। ज्ञापनं मारणादिकं च तस्यार्थः। कथं 'विज्ञापना[1] भर्तृषु सिद्धिमेति' इति 'तज्ज्ञापयत्याचार्यः[2]' इति च। शृणु। माधवमते अचाक्षुषज्ञाने मित्वाभावात्। ज्ञापनमात्रे मित्वमिति मते तु ज्ञा नियोगे इति चौरादिकस्य। धातूनामनेकार्थत्वात्। निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः। कम्पने चलिः ८१२। चल कम्पने इति ज्वलादिः। चलयति शाखाम्। कम्पनादन्यत्र तु शीलं चालयति। अन्यथा करोतीत्यर्थः। हरतीत्यर्थः, इति स्वामी। सूत्रं चालयति। क्षिपतीत्यर्थः। छदिः ८१३ ऊर्जने। छद अपवारणे

---

ननु चौरादिकस्यापि ज्ञपेर्मारणतोषणनिशामनेष्वेवार्थेषु मित्त्वमस्तु, तत्रार्थान्तरनिर्देशाभावात्। तथाच माधवमते कथं बोधनेऽर्थे मित्त्वमित्यत आह—**ज्ञापनं मारणादिकं च तस्यार्थ इति**। ज्ञापनं मारणं तोषणं निशामनं च तस्य चौरादिकस्य ज्ञपधातोरर्थो माधवमते इत्यर्थः। **कथमिति**। ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वाद्धस्वप्रसङ्गादिति भावः। **शृणिवति**। उत्तरमिति शेषः। **मित्त्वाभावादिति**। ह्रस्वो नेति शेषः। विज्ञापनेत्यत्र तत् ज्ञापयतीत्यत्र च अचाक्षुषमेवाऽऽत्मज्ञानं विवक्षितमिति भावः। ननु ज्ञापनमात्रे मित्त्वमिति मते विज्ञापनेत्यत्र तत् ज्ञापयतीत्यत्र च मित्त्वं दुर्वारमित्यत आह—**ज्ञापनमात्रे इति**। **चौरादिकस्येति**। विज्ञापनेति, ज्ञापयतीति च रूपमिति शेषः। 'नान्ये मितोऽहेतौ' इति निषेधान्न तस्य मित्त्वमिति भावः। ननु नियोगार्थस्य तस्य कथं ज्ञापने वृत्तिरित्यत आह—**धातूनामिति**। **न कापीति**। विज्ञापनेत्यत्र ज्ञापयतीत्यत्र च ज्ञापनार्थवृत्तित्वात् ज्ञापनस्य च मारणतोषणतीक्ष्णीकरणान्यत्वान्न तस्मिन्नर्थे ज्ञाधातोर्मित्त्वप्रसक्तिरिति भावः। एवंच माधवमते बोधने ज्ञाधातोः ज्ञापयतीत्युपधादीर्घः। ज्ञपधातोस्तु ज्ञपयतीत्युपधाह्रस्व इति रूपद्वयमपि साध्विति स्थितम्।

**कम्पने चलिरिति**। इका निर्देशोऽयम्। चलधातुः कम्पने मिदित्यर्थः। **ज्वलादिरिति**। तस्य चलेः कम्पने मित्त्वार्थोऽत्रानुवाद इति भावः। **शीलं चालयतीति**। अत्र कम्पनार्थकत्वाभावान्न मित्त्वमिति भावः। तदाह—**अन्यथा करोतीत्यर्थ इति**। धातूनामनेकार्थत्वादिति भावः। **छदिरूर्जने इति**। इका निर्देशोऽयम्। छदधातुरूर्जने मिदित्यर्थः। ऊर्जनं बलवत्करणं प्राणनं वा, ऊर्ज बलप्राणनयोरित्युक्तेः। अन्यत्र पठितस्यात्रार्थविशेषे णौ मित्त्वार्थोऽनुवाद इति सिद्धान्तः। छदधातुस्त्वयं चुराद्यन्तर्गणे युजादौ पठितः। तस्यात्रानुवादो

---

१ काले प्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति। कुमार सं० स० ७ श्लो० ९३।

२ व्याकरणमहाभाष्ये पाणिनिसूत्रे १-१-६८ इत्यादौ।

**इति चौरादिकस्य** स्वार्थे णिजभावे मित्वार्थोऽयमनुवादः अनेकार्थत्वादूर्जेऽर्थे वृत्तिः। छदन्तं प्रयुङ्क्ते छदयति। बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। अन्यत्र छादयति। अपवारयन्तं प्रयुङ्क्ते इत्यर्थः। स्वार्थे णिचि तु छादयति। बलीभवति प्राणीभवति अपवारयति वेत्यर्थः। जिह्वोन्मथने लडिः ८१४। लड विलासे इति पठितस्य मित्वार्थोऽनुवादः। उन्मथनं क्षोभणम्। जिह्वा-शब्देन षष्ठीतत्पुरुषः। लडयति जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते। समाहारद्वन्द्वोऽयम्। लडयति शत्रुम्। लडयति दधि। अन्यत्र लाडयति पुत्रम्। मदी ८१५ हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। दैवादिकस्य मित्वार्थोऽयमनुवादः। मदयति। हर्षयति ग्लेपयति

---

त्यर्थः नान्ये मितोऽहेताविति ज्ञपादिपञ्चकव्यतिरिक्तस्य चुरादौ मित्त्वनिषेधादित्यत आह—**छद अपवारणे इति**। चुराद्यन्तर्गणयुजादिपठितस्य 'आ धृषाद्वा' इति स्वार्थिकणिजभावपक्षे ऊर्जनेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। हेतुमण्णिचि इत्यर्थः। स्वार्थिकणिचि सत्येव नान्ये मित इति निषेधप्रवृत्तेरिति भावः। नन्वप-वारणार्थकस्य छदेः कथमूर्जने वृत्तिरित्यत आह—**अनेकार्थत्वादिति**। ननु स्वार्थणिजभावे सति मित्त्वं किमर्थमित्यत आह—**छदन्तं प्रयुङ्क्ते छदयतीति**। अत्र हेतुमण्णिचि ह्रस्वः। नान्ये मित इति निषेधस्तु हेतुमण्णिचि नेति भावः। **अन्यत्रेति**। ऊर्जनादन्यत्र अपवारणे इत्यर्थः। **स्वार्थे णिचि त्विति**। 'नान्ये मितः' इति निषेधस्य तत्र प्रवृत्तेरिति भावः।

**जिह्वोन्मथने लडिरिति**। इका निर्देशोऽयम्। लडधातुर्जिह्वोन्मथने मिदि-त्यर्थः। **लडेति**। 'लड विलासे' इति टवर्गान्तेषु भ्वादौ पठितस्य जिह्वोन्मथनेऽर्थे मि-त्त्वार्थोऽनुवाद इत्यर्थः।एवंच धातुभेदाभावात् सर्वथैव मित्त्वकार्यं भवति।गणभेदाद्धातु-भेदे मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। **लडयति जिह्वामिति**। रसनां रसान् ज्ञापयतीत्यर्थः। 'गतिबुद्धि' इति द्विकर्मकोऽयम्। **लडयति जिह्वयेति**। देवदत्तो रसान् जानाति तज्जिह्वया ज्ञापयतीत्यर्थः। **तद्व्यापार इति**। शब्द-प्रयोगादिजिह्वाव्यापार इत्यर्थः। **समाहारेति**। जिह्वा च उन्मथनं चेति समा-हारद्वन्द्वः। जिह्वाव्यापारे उदाहरति—**लडयति शत्रुमिति**। गेहेशूर इत्यादि-शब्दप्रयोगेण गर्हत इत्यर्थः। उन्मथनं लोडनम् इत्यभिप्रेत्योदाहरति—**लडयति दधीति**। विलोडयतीत्यर्थः। **अन्यत्रेति**। जिह्वोन्मथनादन्यत्रेत्यर्थः। **लाड-यति पुत्रमिति**। क्रीडयतीत्यर्थः। **ग्लेपनं दैन्यमिति**। दीनीभवनमित्यर्थः।

---

१ अस्य भोजस्य 'शब्दानुशासनं' नाम प्रसिद्धो ग्रन्थो व्याकरणे। एष च दशमशताब्द्यां जातः। अयमेव योगसूत्रवृत्तेः राजमृगाङ्कनामकवैद्यकवृत्तिग्रन्थस्य च प्रणेता।

वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुत्पादयतीत्यर्थः। ध्वन ८१६ शब्दे। भाव्ययं मित्त्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः।

अत्र भोजः 'दलिवलिस्खलिरणिध्वनित्रपिक्षपयश्च' इति पपाठ। तत्र ध्वनिरणी उदाहृतौ। दल विशरणे, वल संवरणे, स्खल संचलने, त्रपूष् लज्जायाम् इति गताः। तेषां णौ, दलयति, वलयति, स्खलयति, त्रपयति। क्षै क्षये इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः। क्षपयति। स्वन ८१७ अवतंसने। शब्दे इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति। 'घटादयो मितः' (ग सू १८७)। मित्संज्ञका इत्यर्थः। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग सू १८८)। मितः इत्यनुवर्तते। जॄष् इति षित्वनिर्देशाज्जीर्यतेर्ग्रहणम्। जॄणातेस्तु जारयति। केचित्तु 'जनीजॄष्णसु—' इति पठित्वा ष्णसु

---

ननु लडादौ शपि मदतीत्यादि स्यादित्यत आह—**दैवादिकस्येति**। तथाच श्यन्विकरण एवार्थमिति भावः। **ध्वन शब्दे इति**। पूर्वमनुनासिकान्तेषु अणरणेत्यत्र ध्वणधातुर्मूर्धन्यान्तः पठितः। अयं तु दन्त्यान्त इति भेदः। **भाव्यीति**। ज्वलादौ 'ध्वन शब्दे' इति पठिष्यमाण एवात्र ध्वन्यात्मके अनुच्चारणजन्ये शब्दने मित्त्वार्थमनूद्यते इत्यर्थः। धातुभेदे तु मित्त्वतदभावौ स्यातामिति भावः। **ध्वनयति घण्टामिति**। शब्दायमानां करोतीत्यर्थः। **अन्यत्रेति**। अस्पष्टोच्चारणात्मके शब्दने इत्यर्थः।

**अत्रेति**। घटादावित्यर्थः। **तत्रेति**। दलिवल्यादिष्वित्यर्थः। **उदाहृताविति**। घटादाविति शेषः। तत्र ध्वनिरनुपदमेवोदाहृतः। रणिस्तु कण रण गतावित्यत्रेति बोध्यम्। भोजमते प्रागनयोः पाठो नेति न पौनरुक्त्यम्। **गता इति**। भ्वादौ पठिता इत्यर्थः। इह मित्त्वार्थमनूद्यन्त इति शेषः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। ननु क्षपेरत्र पाठान्मित्त्वे णौ ह्रस्वे क्षपयतीति वक्ष्यति। अस्त्वेवम्। तथापि क्षै क्षये इति भ्वादौ पठिष्यमाणस्य णौ आत्वे पुकि क्षापयतीत्यपि स्यात्, क्षैधातोः क्षपीत्यनुवादासंभवात्। तत्राह—**क्षै इत्यादि**। णौ आत्वे पुकि मित्त्वाद्ध्रस्वे सति क्षपीति क्षै इत्यस्यानुवादसंभव इति भावः। **स्वन अवतंसने इति**। अवतंसनं अलंकृतिः। **पठिष्यमाणस्येति**। घटादिगणादूर्ध्वं स्वन शब्दे इति पठिष्यमाणस्य स्वनेरवतंसनेऽर्थे णौ मित्त्वार्थोऽत्रानुवाद इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। **स्वनयतीति**। भूषयतीत्यर्थ। **अन्यत्रेति**। अवतंसनादन्यत्र शब्देऽर्थे णौ मित्त्वाभावान्न ह्रस्व इति भावः। **घटादयो मित इति**। गणसूत्रम्। ननु घटादिषु मकारानुबन्धादर्शनात्कथं मितस्ते स्युरित्यत आह—**मित्संज्ञका इति**। मित्कार्यभाज इत्यर्थः।

**जनीजॄषिति**। गणसूत्रम्। जनी जॄष् क्नसु रञ्ज् एषां द्वन्द्वात्प्रथमाबहुवच-

**निरसने** इति दैवादिकमुदाहरन्ति। 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' ( ग० सू० १८६ ) एषां मित्त्वं वा। प्राप्तविभाषेयम्। ज्वलयति-ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्रज्वलयति। कथं तर्हि प्रज्वालयति उन्नामयतीति। घञन्तात् 'तत्करोति-' इति णौ। कथं संक्रामयतीति। 'मितां ह्रस्वः' (सू २५६८) इति सूत्रे 'वा चित्तविराग' ( सू २६०५ ) इत्यतो, वा इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्। एतेन 'रंजो विश्रामयन् राज्ञां' 'धुर्यान्विश्रामयेति सः' इत्यादि व्याख्यातम् 'ग्लास्नावनुवमां च' ( ग सू १९० )। अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा। 'न कम्य-

---

नम्। अम् अन्ते येषां ते अमन्ताः। कमिगम्यादयः। एते अघटादित्वेऽपि मित इत्यर्थ। **जीर्यतेरिति**। 'जृष् वयोहानौ' इति श्यन्विकरणस्येत्यर्थः। **जृणातेस्त्विति**। जॄ वयोहानौ इति श्नाविकरणस्य षित्त्वाभावेनात्र ग्रहणाभावान्न मित्त्वमिति भावः। **उदाहरन्तीति**। तन्मते जृणातेरपि मित्त्वमिति भावः। **ज्वलह्वल**। इत्यपि गणसूत्रम्। **प्राप्तविभाषेयमिति**। ज्वलह्वलह्मलां घटादित्वान्नमेर्मान्तत्वाच्च मित्त्वस्य प्राप्तेरिति भावः। **उपसृष्टे त्विति**। सोपसर्गे त्वित्यर्थः। **कथं तर्हीति**। अनुपसर्गादिति विशेषणे सति ज्वलेर्नमेश्च णौ मित्त्वविकल्पाभावाज्जनीजृषिति मित्त्वाद्ध्रस्वो नित्यः स्यादित्याक्षेपः। समधत्ते—**घञन्तादिति**। तत्करोतीति णावित्यनन्तरं समाधेयमिति शेषः। प्रज्वलनं प्रज्वालः। उन्नमनम् उन्नामः। भावे घञ्। उपधावृद्धिः। प्रज्वालं करोतीति उन्नामं करोतीति चार्थे 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्' इति इष्ठवत्त्वात् टिलोपे सति तस्य स्थानिवत्त्वात् मित्त्वप्रयुक्तह्रस्वाभावे प्रज्वालि उन्नामि इत्याभ्यां लटि तिपि शपि गुणे अयादेशे प्रज्वालयति उन्नामयतीति रूपे इति भावः। ननु संपूर्वात् क्रमेर्णौ संक्रामयतीति रूपमिष्यते। तत्र अमन्तत्वेन मित्त्वाद्ध्रस्वप्रसङ्गः। नच क्रमणं क्राम इति घञन्तात्तत्करोतीति णावुक्तरीत्या ह्रस्वाभाव इति समाधानं संभवति, क्रमेर्घञि हि 'नोदात्तोपदेशस्य' इति वृद्धिप्रतिषेधे सति क्रम इत्येव भवति, ननु क्राम इति कृत्वा उक्तसमाधानासंभवादित्यभिप्रेत्याक्षिपति—**कथमिति**। समाधत्ते—**मितामिति**। 'मितां ह्रस्वः' इति सूत्रे वेत्यनुवर्त्य मित्त्वाभावे संक्रामयतीति रूपमित्यन्वयः। ननु कदाचिद्ध्रस्वो दुर्वार इत्यत आह—**व्यवस्थितेति**। तथा चात्र ह्रस्वाभाव एवाश्रीयत इति भावः। **वृत्तिकृदिति**। भाष्ये तु नैतत् इति भावः। **एतेनेति**। व्यवस्थितविभाषाश्रयणेनेत्यर्थः।

'ग्लास्नावनुवमां च' इत्यपि गणसूत्रम्। प्रथमार्थे षष्ठी। अनुपसर्गादिति मित इति वेति चानुवर्तते। फलितमाह-**अनुपसर्गादिति**। **आद्ययोरिति**। ग्लास्ना इत्यनयो-

---

१ रघुवंश सर्ग ४ श्लो. ८५। २ रघुवंश सर्ग १ श्लो. ५४।

मिचमाम्' (ग सू १६१)। अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति। शमो दर्शने (ग सू १६२)। शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु 'प्रणयिनो निशमय्य[1] वधूः कथाः'। कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो मम' इति। शम आलोचने इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः। शाम्यतिवत्। यमो ८१६ अपरिवेषणे (ग सू १६३)। यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु यमयति ब्राह्मणान्। भोजयतीत्यर्थः। 'पर्यवसितं नियमयन्' इत्यादि तु नियमवच्छब्दात्तत्करोतीति

---

रघटादित्वादप्राप्ते मित्त्वे इतरयोर्वनुवमोः प्राप्ते मित्त्वे विभाषेत्यर्थः। तत्र वनेः 'वनु च नोच्यते' इति घटादौ पाठाद्वमेस्त्वमन्तत्वान्मित्त्वप्राप्तिरिति बोध्यम्। 'न कम्यमिचमाम्' इति 'शमो दर्शने' इति च गणसूत्रम्। दर्शनं चाक्षुषज्ञानम्। 'शम उपशमे' इति दैवादिकः श्यन्विकरण एवात्र गृह्यते। ननु 'शम आलोचने' इति चौरादिकः, 'नान्ये मितोऽहेतौ' इति, तस्य मित्त्वनिषेधात्। तदाह—**शाम्यतिरिति। निशामयति रूपमिति**। पश्यतीत्यर्थः। उपशमार्थकस्यापि अनेकार्थकत्वात् दर्शने वृत्तिः। **अन्यत्रेति**। दर्शनादन्यत्रेत्यर्थः। **निशमय्येति**। श्रावयित्वेत्यर्थः। शमेर्ण्यन्तात् क्त्वो ल्यपि कृते 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। **कथमिति। तर्हि**। दर्शनार्थकस्यैव शमेर्मित्त्वनिषेधे सति 'शृणु' इत्यर्थे मित्वाद्ध्रस्वप्रसङ्गान्निशामयेति कथमित्याक्षेपः। समाधत्ते—**शम आलोचने इति चौरादिकस्येति**। निशामयेति रूपमिति शेषः। नान्ये मितोऽहेताविति तस्य मित्त्वनिषेधात् न ह्रस्व इति भावः। ननु चौरादिकस्य शमेरालोचनार्थकत्वात् कथं श्रवणे वृत्तिरित्यत आह—**धातूनामिति। शाम्यतिवदिति**। श्यन्विकरणस्य शमेरुपशमार्थकस्य यथा दर्शने वृत्तिस्तद्वदित्यर्थः।

'यमोऽपरिवेषणे' इत्यपि गणसूत्रम्। भोजनपात्रे ओदनापूपादिभोज्यद्रव्याणां स्थापनं परिवेषणम्। तदाह—**भोजनातोऽन्यत्रेति**। भुक्त्यनुकूलपरिवेषणादन्यत्रेत्यर्थः। 'यम उपरमे' इत्यस्य उपसर्गवशात् परिवेषणे ततोऽन्यस्मिन्नप्यर्थे वृत्तिः संभवति। तत्र अपरिवेषणे वृत्तौ मित्त्वं नेत्यर्थः। **आयामयतीति**। अत्रापरिवेषणे वृत्तेर्न मित्त्वमिति भावः। तदाह—**द्राघयतीति**। दीर्घीकरोतीत्यर्थः। **व्यापारयतीति**। प्रवर्तयतीत्यर्थः। **यमयति ब्राह्मणानिति**। परिवेषणार्थकत्वान्मित्त्वमिति भावः। तदाह—**भोजयतीति**। भुञ्जते ब्राह्मणाः,

---

१ प्रणयिनो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ। इतिपाठः शिशुपालवधे स. ६ श्लो. १६।

२ मार्कण्डेयपुराणे देवीमाहात्म्ये अ. १ श्लो. १।

**णौ बोध्यम् । स्खदिः ८२० अवपरिभ्यां च ( ग सू १६४ ) मित्त्वेव । अव-स्खादयति । परिस्खादयति । अपावपरिभ्यः इति न्यासकारः । स्वामी तु 'न कमि-' इति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शमः अदर्शने इति चिच्छेद । यमस्तु अपरिवेषणे मित्त्वमाह । तन्मते 'पर्यवसितं नियमयन्' इत्यादि सम्य-गेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्य इति नियमात्प्रस्खादयतीत्याह । तस्मा-**

---

तान्परिवेषणेन प्रवर्तयतीत्यर्थः । ननु पर्यवसितं नियमयन्नित्यत्र अपरिवेषणार्थक तया मित्त्वाभावात्कथं ह्रस्व इत्यत आह—**पर्यवसितमित्यादि** । नियमनं नि-यमः । 'यमः समुपनिविषु च' इति भावे अप्प्रत्ययः । तस्मान्मतुप् । नियमव-च्छब्दात्तत्करोतीति णिचि 'विन्मतोर्लुक्' इति मतुपो लुकि णयन्ताच्छतरि गुणायादेशयोर्नियमयच्छब्द इति भावः । वस्तुतस्तु मतुपो लुकि टिलोपस्याप्राप्त्या 'अचो ञ्णिति' इति वृद्धौ पुगागमापत्तिः । ततश्च नियमवदित्यर्थकात् अर्शआद्य-जन्तात् नियमशब्दात् 'तत्करोति' इति णिचि इष्ठवत्त्वाट्टिलोपे तस्य स्थानिवत्त्वा-दुपधावृद्ध्यभावे नियमयन्निति समर्थनीयमिति शब्देन्दुशेखरे स्थितम् ।

'स्खदिरवपरिभ्यां च इत्यपि गणसूत्रम् । स्खदिरिति इका निर्देशः । अव परि आभ्यां परः स्खदधातुर्मित्संज्ञ इत्यर्थः । 'स्खद स्खदने' इति घटादौ पाठान्मित्त्वप्राप्तिः । **परिस्खादयतीति** । अषोपदेशत्वेन आदेशसकारत्वाभावान्न ष इति भावः । **अपावेति** । 'स्खदिरपावपरिभ्यः' इति न्यासकारः पपाठेत्यर्थः । तन्मते अपस्खा-दयतीत्यत्रापि मित्त्वाभावान्न ह्रस्वः । **स्वामी त्विति** । 'न कम्यमिचमाम्' इत्यत्र श्रुतः नञ् 'शमो दर्शने' 'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्यां च' इति त्रिषु सूत्रेषु नानुवर्तते । शमः अदर्शने इति च्छेदः । शमधातुः अदर्शने मित्स्यादित्यर्थः । अमन्तत्वादेव सिद्धे नियमार्थमिदम् । अदर्शन एव शमधातुर्मित्स्यात् नतु दर्शने इति स्वामिमतम् । इदं च पर्यवसानगत्या पूर्वमतान्नातिरिच्यते ।

**यमस्त्विति** । यमधातोस्तु अपरिवेषण एव मित्त्वमाहेत्यर्थः । अमन्तत्वादेव सिद्धेरपरिवेषण एव यमधातुर्मित् नतु परिवेषण इति फलति । एवं च द्राघयति व्यापारयति वेत्यर्थे मित्त्वाद्ध्रस्वे आयमयतीत्येव रूपम् । परिवेषणे तु मित्त्वाभावा-द्ध्रस्वाभावे यामयति ब्राह्मणानिति भवतीति पूर्वमताद्विपरीतं फलति । एवं च पर्यवसितं नियमयन्नित्यत्र यमेरपरिवेषणार्थत्वान्मित्त्वे ह्रस्वो निर्बाधः । तदाह—**तन्मते इति** । स्खदेर्घटादित्वादेव मित्त्वसिद्धेः स्खदिरवपरिभ्यां चेति सूत्रमपि नियमार्थम् । सोपसर्गस्य चेत् स्खदेर्मित्त्वं तर्हि अवपरिभ्यां परस्यैव मित्त्वं न तूपसर्गान्तरादिति । एवंच प्रस्खादयतीत्यत्र मित्त्वाभावान्न ह्रस्वः । **अवस्खदयति** परिस्खदयति इत्यत्र तु मित्त्वाद्ध्रस्व इति फलति । तदाह—**उपसृष्टस्येति** । सोपसर्गस्येत्यर्थः । पूर्वमते तु अवपरिभ्यां परस्य मित्त्वनिषेधादव**स्खादयति परिस्खा-**

स्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् । फण ८२१ गतौ । न इति निवृत्तमसंभवात् । निषेधात्पूर्वमसौ न पठितः । फणादिकार्यानुरोधात् । (२३५४) **फणां च सप्तानाम्** । एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः फेणुः । पफणतुः पफणुः । फेणिथ—पफणिथ । फणयति । वृत् । घटादिः समाप्तः । फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव । राजृ ८२२ दीप्तौ । स्वरितेत् । राजति-राजते । रेजतुः-रराजतुः । रेजे-रराजे । अतः इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । टु भ्राजृ ८२३ टु भ्राजृ ८२४ टु भ्लाशृ ८२५ दीप्तौ ।

---

दयतीति न ह्रस्वः । प्रस्खदयतीत्यत्र तु अवपरिपूर्वकत्वाभावेन मित्त्वनिषेधाभावाद्ध्रस्व इति विपरीतम् । **तस्मादिति** । यमोऽपरिवेषणे, स्खदिरवपरिभ्यां चेति सूत्रद्वये उक्तरीत्या मित्त्वनियमविध्याश्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः । **उपेक्ष्यमिति** । 'न पादम्याङ्' इति सूत्रव्याख्यावसरे यमोऽपरिवेषणे इति मित्त्वं प्रतिषिध्यत इति वृत्तिन्यासयोरुक्तत्वादिति भावः । केचित्तु स्वामिमते पर्यवसितं नियमयन्नित्यादिसामञ्जस्यात्तावेवोपेक्ष्याविल्याहुः ।

**फण गताविति** । ननु घटादित्वेऽपि नायं मित्, इतः प्राक् 'स्वन अवतंसने' इत्युत्तरमेव घटादयो मित इत्युक्तेः । अतः कथमत्र निषेधः तत्राह—**न इति निवृत्तमसंभवादिति** । प्राप्तिं विना मित्त्वस्य निषेधासंभवादिह नेति नानुवर्तते, किंतु मिदित्येवानुवर्तते इत्यर्थः । ननु फण गतावित्यत्र मिन्नेति यदि नानुवर्तते तर्हि 'न कम्यमिचमाम्' इति निषेधकाण्डात् प्रागेवायं कुतो न पठितः । तत्राह—**निषेधात्पूर्वमसौ न पठित इति** । कुत इत्यत आह—**फणादिकार्यानुरोधादिति** । निषेधकाण्डात्प्रागेव फणेः पाठे कम्यमिचमादीनामपि फणादिष्वन्तर्भावः स्यादिति भावः । **फणां च** । 'अत एकहल्मध्ये' इत्यतो लिटीति 'थलि च सेटि' इति चानुवर्तते । 'ध्वसोः' इत्यतः एदिति, 'गमहन-' इत्यतः कितीति, 'वा जॄभ्रमुत्रसाम्' इत्यतो वेति च । तदाह—**एषामिति** । फणादीनामित्यर्थः । फणामिति बहुवचनात् तदादिलाभः । 'फण गतौ' इत्यत्र मिदित्येवानुवर्तते नेति तु नानुवर्तते इत्यस्य प्रयोजनमाह—**फणयतीति** । **वृदिति** । कर्तरि क्विबन्तम् । वृतुधातुरिह समाप्त्यर्थकः । तदाह—**घटादिः समाप्त इति** । **फणेः प्रागेवेति** । एवं सति फणेरघटादित्वान्न मित्त्वमिति भावः । तदाह—**तन्मते फाणयतीत्येवेति** ।

इति घटादयः ।

**राजृ दीप्ताविति** । इत आरभ्य षण्णामेत्त्वाभ्यासलोपौ फणादित्वात्पक्षे भवतः । तदाह—**रेजतुरित्यादि** । ननु ' फणां च सप्तानाम् ' इत्यत्र अत इत्यनुवृत्तेः कथमिह एत्वाभ्यासलोपावित्यत आह—**अत इत्यनुवृत्तावपीति** । अत इति नानुवर्तते । तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्यात् राजृधातोराका-

अनुदात्तेतः। भ्राजतेरिह पाठः फणादिकार्यार्थः। पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः। तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम्। भ्रेजे-बभ्राजे। 'वा भ्राश-' (सू २३२१) इति श्यन् वा। भ्राश्यते-भ्राशते। भ्रेशे-बभ्राशे। भ्लाशते-भ्लाश्यते। भ्लेशे-बभ्लाशे। द्वावपीमौ तालव्यान्तौ। स्यमु ८२६ स्वन ८२७ ध्वन ८२८ शब्दे। स्यमादयः चरत्यन्ताः परस्मैपदिन। स्येमतुः-सस्यमतुः। अस्यमीत्। स्वेनतुः-सस्वनतुः। अस्वनीत्-अस्वानीत्। विष्वणति। अवष्वणति। सशब्दं भुङ्क्त इत्यर्थः। 'वेश्च स्वनः-' (सू २२७४) इति षत्वम्। फणादयो गताः। दध्वनतुः। षम ८२९ ष्टम ८३० अवैकल्ये। ससाम। तस्ताम। ज्वल ८३१ दीप्तौ। 'अतो लरान्तस्य' (सू २३३०)। अज्वालीत्। चल ८३२ कम्पने। जल ८३३ घातने। घातनं तैक्ष्ण्यम्। टल ८३४ ट्वल

---

रस्याप्येत्त्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः। अत इति राजादिधातौ न संबध्यते, असंभवादिति यावत्। **टु भ्राजृ टु भ्राशृ टु भ्लाशृ दीप्ताविति।** टुरित् 'ट्वितोऽथुच्' इत्येतदर्थः। **अनुदात्तेत इति।** एते त्रय इति शेषः। ननु पूर्वं चवर्गान्तेष्वनुदात्तेत्सु भ्राजतेः पाठात् पुनरपि तस्येह पाठः किमर्थ इत्यत आह—**भ्राजतेरिति।** तर्हि 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति भ्राजेः पूर्वं पाठो व्यर्थ इत्यत आह—**पूर्वं पाठस्त्विति। षत्वाभावार्थ इति।** व्रश्चभ्रस्जेति षत्वविधौ भ्राजेर्ग्रहणाभावार्थ इत्यर्थः। ननु पूर्वं पठितस्यापि षत्वविधौ कुतो न ग्रहणमित्यत आह—**तत्र हीति।** षत्वविधौ हीत्यर्थः। एत्त्वाभ्यासलोपयोः पाक्षिकत्वादाह—**भ्रेजे बभ्राजे इति। द्वावपीमाविति।** द्वितीयातृतीयावित्यर्थः। ननु विष्वणतीत्यत्र कथं षत्वम्? केवलदन्त्याजन्तसादित्वाभावेन अषोपदेशतया आदेशसकारत्वाभावात्। अवष्वणतीत्यत्र इणकवर्गाभ्यां परत्वाभावान्न षत्वस्य प्रसक्तिः। सात्पदाद्योरिति निषेधाच्चेत्यत आह—**वेश्च स्वन इतीति।** तत्र चकारेण अवाच्चेत्यपि लभ्यत इति भावः।

**फणादयो गता इति।** ध्वनतेः प्रागिति शेषः। ततश्च ध्वनेर्न फणादिकार्यमिति भावः। तदाह—**दध्वनतुरिति। षम ष्टमेति।** षोपदेशौ। **तस्तामेति।** सत्वे सति ष्टुत्वनिवृत्तिरिति। **तैक्ष्ण्यमिति।** तीक्ष्णीभवनमित्यर्थः। **टल ट्वल वैक्लव्ये इति।** वैक्लव्यं भयादिजनितो व्यग्रीभावः। **णल गन्धे इति।** णोपदेशोऽयम्। गन्धः गन्धक्रिया। **तद्व्यापार इति।** बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः। पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः। लुङि लृदित्त्वात् च्लेरङि कृते अपत् अ त् इति स्थिते—**पतः पुम्।** शेषपूरणेन सूत्रं व्याचष्टे—**अङि परे इति।** 'ऋदृशोऽङि' इत्यतः तदनुवृत्तेरिति भावः। पतेः पुम् स्यादङि परे इति फलितम्। पुमि मकार इत्, उकार उच्चारणार्थः। **मित्त्वादन्त्यादचः परः।** तदाह—**अपप्तदिति। क्वथे निष्पाके इति।** जलक्षीरघृतादीनां

८३५ वैक्लव्ये । ष्ठल ८३६ स्थाने । हल ८३७ विलेखने । णल ८३८ गन्धे। बन्धने इत्येके । पल ८३९ गतौ । पलति । बल ८४० प्राणने धान्यावरोधने च । बलति । बेलतुः बेलुः । पुल ८४१ महत्त्वे । पोलति । कुल ८४२ संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । शल ८४३ हुल ८४४ पत्लृ ८४५ गतौ । शशाल । जुहोल । पपात पेततुः। पतिता । (२३५५) पतः पुम् । ७ । ४ । १९॥ अङि परे । अपप्तत् । 'नेर्गद—' ( सू २२८५ ) इति णत्वम् । प्रण्यपप्तत् । क्वथे ८४६ निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । पथे ८४७ गतौ । अपथीत् । मथे ८४८ विलोडने । मेथतुः । अमथीत् । टु वम् ८४९ उद्गिरणे । इहैव निपातनात् ऋतः इत्त्वमिति सुधाकरः । ववाम ववमतुः । वादित्वादेत्त्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । भ्रमु ८५० चलने । 'वा भ्राश—' ( सू २३२१ ) इति श्यन्वा । भ्रम्यति—भ्रमति । भ्राम्यति इति तु दिवादौ वक्ष्यते । (२३५६) वा जॄभ्रमुत्रसाम् । ६ । ४ । १२४ ॥ एषामेत्त्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः—बभ्रमतुः । अभ्रमीत् । क्षर ८५१ संचलने । अक्षारीत् ।

अथ द्वावनुदात्तेतौ । षह ८५२ मर्षणे । 'परिनिविभ्यः—' (सू २२७५) इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसह—' ( सू २३४० ) इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः । (२३५७) सहिवहोरोदवर्णस्य ।

---

पादभागादिशोषणपर्यन्तः पाको निष्पाकः । **अक्वथीदिति** । एदित्त्वान्न वृद्धिः । एवं अमथीत् । **टु वम् उद्गिरणे इति** । टुरित् । नायमुदित् । तेन 'उदितो वा' इति क्त्वायामिड्विकल्पो न । 'गॄ निगरणे' इति दीर्घान्तोऽयम् । नन्वस्माद्धातोर्ल्युटि 'ॠत इद्धातोः' इति इत्त्वं बाधित्वा परत्वात् 'सार्वधातुक' इति गुणे सति उद्गरण इत्येव निर्देशो युज्यत इत्यत आह—**इहैवेति** । उद्गिरण इत्यर्थनिर्देशः पाणिनीय इति सुधाकरो मन्यते । **भ्रमु चलने इति** । वक्रमार्गसंचारे इत्यर्थः । अयथार्थज्ञानेऽप्ययम् । 'उदितो वे'ति क्त्वायामिड्विकल्पार्थमुदित्त्वम् । **वा जॄभ्रमु** । 'अत एकहल्मध्ये' इत्यतो लिटि इति 'थलि च सेटि' इति चानुवर्तते । 'घ्वसोरेद्धौ' इत्यतः एदिति 'गमहन' इत्यतः क्ङितीति च । तदाह—**एषामिति** । **अभ्रमीदिति** । ह्मयन्तेति न वृद्धिः । **अक्षारीदिति** । 'अतो ल्रान्तस्य' इति वृद्धिः ।

**षह मर्षणे इति** । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् । **इडभावे इति** । सह् ता इति स्थिते 'हो ढः' इति ढत्वं 'झषस्तथोः' इति तकारस्य

६।३।११२॥ अनयोरवर्णस्य ओत्स्याड्ढलोपे सति। (२३५८) सोढः। ८।३।११५॥ सोढ्रूपस्य सहेः सस्य षत्वं न स्यात्। परिसोढा। (२३५९) सिवादीनां वाड्व्यवायेऽपि। ८।३।७१॥ परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्याद्ड्व्यवायेऽपि। पर्यषहत–पर्यसहत। रमु ८५३ क्रीडायाम्। रेमे। रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त।

अथ कसन्ताः परस्मैपदिनः। षद्लृ ८५४ विशरणगत्यवसादनेषु (२३६०) पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७।३।७८॥ पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद सेदतुः। सेदिथ—ससत्थ। सत्ता। सत्स्यति। लृदित्त्वादङ्। असदत्। 'सदिरप्रतेः' (सू २२७१)। निषीदति। न्यषीदत्। (२३६१) सदेः परस्य लिटि। ८।३।११८॥ सदेरभ्यासा-

धत्वम्। धस्य ष्टुत्वेन ढः। 'ढो ढे लोपः' इति पूर्वस्य ढस्य लोप इत्यर्थः। सढा इति स्थितम्। **सहिवहोः। ढलोपे इति।** ढ्रलोप इत्यतः तदनुवृत्तेरिति भावः। रलोप इति तु नानुवर्तते असंभवात्। तथाच सकारादकारस्य ओत्वे सोढेति रूपम्। परिसोढेत्यत्र 'परिनिविभ्य' इति षत्वे प्राप्ते। **सोढः।** सोढ इति सहेरोत्वसंपन्नस्य षष्ठ्यन्तम्। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'न रपर' इत्यतो नेति। मूर्धन्य इत्यधिकृतम्। तदाह—**सोढ्रूपस्येत्यादिना। सिवादीनाम्।** 'परिनिविभ्यः' इति सूत्रादुत्तरमिदं सूत्रम्। तदाह—**परिनिविभ्यः परेषामिति।** सिवुसहसुट्स्तुस्वञ्जामिति शेषः। **रमु क्रीडायामिति।** नायमुदिदिति माधवः। केचित्तु उदितं मत्वा 'उदितो वा' इति क्त्वायामिड्विकल्पमिच्छन्ति। अनिट्कोऽयम्। लिटि क्रादिनियमादिट्। तदाह—**रेमिषे इति।**

**अथ कसन्ता इति।** 'कस गतौ' इत्येतत्पर्यन्ता इत्यर्थः। षद्लृधातुः षोपदेशः अनिट्कश्च। लटि शपि सद् अ ति इति स्थिते—**पाघ्राध्मा।** पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद् एषां द्वन्द्वात् षष्ठीबहुवचनम्। पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद एषां द्वन्द्वात् प्रथमाबहुवचनम्। यथासंख्यमादेशाः। 'ष्ठिवुक्लमु' इत्यत शितीत्यनुवर्तते। श् चासौ इच्चेति कर्मधारयः। अङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः। तदाह—**इत्संज्ञकेति। ससादेति।** इत्संज्ञकशकारादिप्रत्ययाभावात् न सीदादेशः। श् इत् यस्य सः शित्। शितीति बहुव्रीह्याश्रयणे तु पाधातोः कर्मणि लिटि एशि आल्लोपे पपे इत्यत्रापि पिबादेशः स्यादिति बोध्यम्। थलि क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधेऽपि भारद्वाजनियमाद्वेट्। तत्र इट्पक्षे 'थलि च सेटी'त्येत्त्वाभ्यासलोपौ। तदाह—**सेदिथ ससत्थेति।** सेदिव सेदिम। क्रादिनियमादिट्। **न्यषीददिति** 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। निषसादेत्यत्र अभ्यासात् परस्य 'स्था-

१ 'यम रम' इति सक् तु 'व्यरं सी'दित्यादौ परस्मैपदे उपयोक्ष्यते।

**रपरस्य षत्वं न स्यात्लिटि। निषसाद निषेदतुः। शद्लृ ८५५ शातने। विशीर्णतायामयम्। शातनं तु विषयतया निर्दिश्यते। (२३६२) शदेः शितः। १।३।६०॥ शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद शेदतुः। शेदिथ-शशत्थ। शत्ता। अशदत्। क्रुश ८५६ आह्वाने रोदने च। क्रोशति। क्रोष्टा। च्लेः क्सः। अक्रुक्षत्। कुच ८५७ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच। बुध ८५८ अवगमने। बोधति। बोधिता। बोधि-**

दिष्वभ्यासेन' इति षत्वे प्राप्ते—**सदेः परस्य**। 'न रपर' इत्यतः नेत्यनुवर्तते। मूर्धन्य इत्यधिकृतम्। सदेरित्यवयवषष्ठी। परशब्द उत्तरखण्डपरः। सदेरुत्तरखण्डस्य षत्वं नेति लभ्यते। फलितमाह—**सदेरभ्यासात्परस्येति।**

**शद्लृ शातने इति।** ननु शद्धातोरस्मात् हेतुमण्ण्यन्तात् ल्युटि 'शदेरगतौ तः' इति दकारस्य तकारे शातनशब्दः। तथाच शातनं शीर्णतानुकूलक्रियेति फलति। एवं च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयत इति वक्ष्यमाणमुदाहरणं कथमित्यत आह—**विशीर्णतायामिति।** विशरणे इत्यर्थः। तर्हि कथं शातनमिति हेतुमण्णिजित्यत आह—**शातनं तु विषयतयेति।** विपूर्वात् 'षिञ् बन्धने' इत्यस्मात् विषयशब्दः। अविनाभावेनेत्यर्थः। प्रयोजकव्यापारं विना विशरणस्यासंभवात् शातननिर्देशः। ण्यर्थस्याविवक्षितत्वात् विशरणमेव शद्लृधात्वर्थ इति यावत्। **शदेः शितः।** 'अनुदात्तङितः' इत्यस्मादात्मनेपदमित्यनुवर्तते। श् इत् यस्य सः शित्। शप् विवक्षितः। शिति विवक्षिते सतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसंभवात्। तदाह—**शिद्भाविन इति।** शित् भावी भविष्यन् यस्मात्स शिद्भावी तस्मादित्यर्थः। **शीयते इति।** शपि शदेः शीयादेशः। विशीर्यतीत्यर्थः। शीयेते शीयन्ते इत्यादि। शिद्विषयादित्युक्तेर्लिटि नात्मनेपदम्। इत्संज्ञकशकाराद्भावित्युक्तेर्न शीयादेशः। तदाह—**शशादेति।** अनिट्कोऽयम्। क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति नियमात्थलि भारद्वाजनियमात् वेट्। तदाह—**शेदिथ शशत्थेति च।** इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपाविति भावः। शेदिव शेदिम। क्रादिनियमादिट्। **अशददिति।** लृदित्त्वादङिति भावः।

क्रुशधातुरनिट्कः। चुक्रोशिथ। क्रादिनियमात्थलि नित्यमिट्। अजन्ताकारवत्त्वाभावान्न भारद्वाजनियमः। चुक्रुशिव चुक्रुशिम। **क्रोष्टेति।** व्रश्चादिना शस्य षत्वे ष्टुत्वेन तकारस्य टः। **च्लेः क्स इति।** इगुपधशलन्तत्वादिति भावः। **अक्रुक्षदिति।** व्रश्चादिना शस्य षः। 'षढोः' इति षस्य कः, सस्य षत्वम्। क्त्विान्न गुणः। **कुच संपर्चनेति।** 'कुच शब्दे' इति पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादिकार्यणप्रत्ययार्थः। अर्थनिर्देशः क्वचित्पाणिनीय इति भूधातौ प्रपञ्चितम्। **बुध अवगमने इति।** सेट्कोऽयम्, अनिट्सु श्यन्विक-

१ अत्र 'विश्रणाति' इत्युचितम्।

ष्यति। रुह ८५९ बीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। अरुक्षत्। कस ८६० गतौ। अकासीत्-अकसीत्। वृत्। ज्वलादिगणः समाप्तः।

अथ गूहत्यन्ताः स्वरितेतः। हिक्क ८६१ अव्यक्ते शब्दे। हिक्कति-हिक्कते। अञ्चु ८६२ गतौ याचने च। अञ्चति—अञ्चते। अचु इत्येके। अचि इत्यपरे टु याचृ ८६३ याच्ञायाम्। याचति—याचते। रेटृ ८६४ परिभाषणे। रेटति-रेटते। चते ८६५ चदे ८६६ याचने। चचात-चेते। अचतीत्। चचाद-चेदे। अचदीत्। प्रोथृ ८६७ पर्याप्तौ। पुप्रोथ-पुप्रोथे। मिदृ ८६८ मेदृ ८६९ मेधाहिंसनयोः। मिमेद-मिमिदे। थान्ताविमौ इति स्वामी। मिमेथ। धान्तौ इति न्यासः। मेधृ ८७० संगमे च। मेधति। मिमेधे। णिदृ ८७१ णेदृ ८७२ कुत्सासंनिकर्षयोः। निनेद निनिदतुः। निनिदे। निनेदे। शृधु८७३मृधु ८७४उन्दने। उन्दनं क्लेदनम्। शर्धति-शर्धते। शर्धिता। मर्धति-मर्धते। बुधिर् ८७५ अवबोधने। बोधति-बोधते। इरित्त्वादङ्वा। अबुधत्—अबोधीत्-अबोधिष्ट। 'दीपजन—' ( सू २३२८ ) इति चिण्तु न भवति। पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात्। उ बुन्दिर् ८७६ निशामने। निशामनं ज्ञानम्। बुबुन्दे। अबुदत्। अबुन्दीत्। वेणृ ८७७ गतिज्ञानचिन्तानिशामनवादित्र-

---

रणस्यैव बुधेर्ग्रहणात्। तदाह—**बोधितेति**। अबोधीत्। रुहधातुरनिट्कः। क्रादिनियमात्थल्यपि नित्यमिट्। अजन्ताकारवत्त्वाभावात् न भारद्वाजनियमः। **रोढेति**। लुटि तासि गुणे ढत्वधत्वष्टुत्वढलोपाः। **रोक्ष्यतीति**। लृटि स्ये ढकषाः। **अरुक्षदिति**। इगुपधशलन्तत्वात् क्से ढकषाः कित्त्वान्न गुणः। **वृदिति**। 'ज्वलितिकसन्तेभ्यः' इति उत्तरावधेरपि कसेर्ग्रहणादेव सिद्धेः वृत्करणं स्पष्टार्थमित्याहुः। इति ज्वलादयः।

**गूहत्यन्ता इति**। 'गुहू संवरणे' इत्येतत्पर्यन्ता इत्यर्थः। चते चदे याचने। **अचतीदिति**। एदित्त्वान्न वृद्धिः। एवमचदीत्। **बुधिर् अवबोधने इति**। 'बुध अवगमने' इति केवलपरस्मैपदी गतः। स तु ज्वलादिकार्यार्थः। अयं तु इरित् स्वरितेत्। अनिट्सु श्यन्विकरणस्यैव पाठादयं सेट्। **अबुधदिति**। इर इत्त्वेऽपि तदवयवस्य इकारस्य प्रत्येकं मित्त्वाभावान्न नुम्। स्वरितेत्त्वप्रयुक्तमात्मनेपदं तु भवत्येव, स्वरितेत्सु पाठसामर्थ्यात्। वस्तुतस्तु इकारस्य प्रत्येकमित्त्वेऽपि न नुम्, इदितो नुमित्यत्र कर्मधारयमाश्रित्य इत्संज्ञकेकारान्तस्यैव नुम्विधेः। **पूर्वोत्तरेति**। जनपूरिसाहचर्येणेत्यर्थः। **उ बुन्दिरिति**। आद्य उकार इत् 'उदितो वे'ति क्त्वायामिड्विकल्पार्थः। **अबुददिति**। इरित्त्वादङि अनिदितामिति नलोपः। इर इकारस्य प्रत्येकमित्संज्ञाविरहात् अनिदितामित्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दुशेखरे स्थितम्। **वेणृ गतीति**। वाद्यभाण्डस्य वादनार्थं

प्रहणेषु । वेणति–वेणते । नान्तोऽप्ययम् । खनु ८७८ अवदारणे । खनति–खनते । (२३६३) **गमहनजनखनघसां लोपः क्ङित्यनङि** । ६।४।९८॥ एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । 'ये विभाषा' ( सू २३१९ )। खायात्–खन्यात् । चीवृ ८७९ आदानसंवरणयोः । चिचीव–चिचीवे । चायृ ८८० पूजानिशामनयोः । व्यय ८८१ गतौ । अव्ययीत् । दाशृ ८८२ दाने । ददाश–ददाशे । भेषृ ८८३ भये । गतौ इत्येके । भेषति–भेषते । भ्रेषृ ८८४ भ्लेषृ ८८५ गतौ । अस ८८६ गतिदीप्त्यादानेषु । असति–असते । आस–आसे । अयं षान्तोऽपि । स्पश ८८७ बाधनस्पर्शनयोः । स्पर्शनं ग्रथनम् । स्पशति–स्पशते । लष ८८८ कान्तौ । 'वा भ्राश—' ( सू २३२१ ) इति श्यन्वा । लष्यति–लषति । लेषे । चष ८८९ भक्षणे । छष ८९० हिंसायाम् । चच्छषतुः चच्छषे । झष ८९१ आदानसंवरणयोः । भक्ष ८९२ भ्लक्ष ८९३ अदने । भक्ष इति मैत्रेयः । दासृ ८९४ दाने । माहृ ८९५ माने । गुहू ८९६ संवरणे । (२३६४) **ऊदुपधाया गोहः** । ६।४।८९॥ गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये । गूहति–गूहते । ऊदित्त्वादिड्वा । गूहिता–गोढा । गूहिष्यति–घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे

---

प्रहणं वादित्रग्रहणम् । खनुधातुरुदित् । क्त्वायामिड्विकल्पः । **गमहन** । **उपधाया इति** । 'ऊदुपधायाः' इत्यतः तदनुवृत्तेरिति भावः । **अजादाविति** । अचि श्नुधात्वित्यतः अनुवृत्तस्य अचि इत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः । क्ङितीत्युक्तेः चखानेत्यत्र नोपधालोपः । अनङीति किम् । अगमत् । चख्ने चख्नाते इत्यादि । **व्यय गताविति** । अयं वित्तत्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात् । **अव्ययीदिति** । ह्ययन्तेति न वृद्धिः । **चष भक्षणे इति** । चचाष चेषतुः । **छष हिंसायामिति** । वैरूप्यसंपादकादेशादित्वादेत्त्वाभ्यासलोपौ न । तदाह—**चच्छषतुः इति** ।

**गुहू संवरणे इति** । उदुपधोऽयम् । ऊदित् । **ऊदुपधायाः** । गोह इति कृतलघूपधगुणस्य गुहेर्निर्देशः । ततश्च गुणविषय एवेदं भवति । अचि श्नुधात्वित्यतः अनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः । तदाह—**गुह उपधाया इत्यादिना** । **गुणहेताविति** । गुणं प्रति परनिमित्तभूत इत्यर्थः । गुणापवादः । जुगूह । गुणहेताविति किम् । जुगुहतुः जुगुहुः । जुगुहे जुगुहाते जुगुहिरे । जुगूहिथ–जुगोढ । ढत्वधत्वष्टुत्वढलोपाः । जुगुहथुः जुगुह । जुगुहिषे–जुघुक्षे । ढत्वभष्भावकत्वषत्वानि । जुगुहाथे जुगुहिध्वे–जुघुढ्वे । जुगूह जुगुहिव—जुगुह्व जुगुहिम—जुगुह्म । जुगुहे जुगुहिवहे—जुगुह्वहे जुगुहिमहे—जुगुह्महे । इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इट्पक्षे ऊत्वे रूपमाह—**गूहितेति** । इडभावे अजादिप्रत्ययाभावात् ऊत्त्वाभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रूपमाह—**गोढेति** । लुटि से

क्सः। अघुक्षत्। (२३६५) लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। ७।३।७३॥ एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। ढत्वधत्वष्टुत्वढलोप-दीर्घाः। अगूढ। अघुक्षत। 'क्सस्याचि' (सू २३३७) इत्यन्तलोपः। अघु-क्षाताम् अघुक्षन्त। अगुह्वहि-अघुक्षावहि। अघुक्षामहि।

अथाजन्ता उभयपदिनः। श्रिञ् ८९७ सेवायाम्। श्रयति-श्रयते। शिश्रियतुः। श्रयिता। 'णिश्रि—' (सू २३१२) इति चङ्। अशिश्रियत्। भृञ् ८९८ भरणे। भरति। बभार बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्ता।

---

इट्पक्षे ऊत्वे रूपमाह—गूहिष्यतीति। इडभावे तु गुणढत्वभष्भावकत्वषत्वेषु रूपमाह—घोक्ष्यतीति। गूहिष्यते, घोक्ष्यते इत्यप्युदाहार्यम्। गूहतु। गूहताम्। अगूहत्। अगूहत। गूहेदिति। गूहेतेत्यपि ज्ञेयम्। गुह्यादिति। आशीर्लिङि अजादिप्रत्ययाभावादूत्त्वं न। कित्त्वान्न गुणः। लुङि इट्पक्षे सिज्लोपे ऊत्वे रूप-माह—अगूहीदिति। अगूहिष्टाम् अगूहिषुरित्यादि। इडभावे क्सः इति। इगुपधशलन्तत्वादिति भावः। अघुक्षदिति। ढत्वभष्भावकत्वषत्वानि। अघुक्षाताम् अघुक्षन्नित्यादि।

लुङस्तङि विशेषमाह—लुग्वा दुह। दन्त्ये तङीति। दन्त्यादौ तङीत्यर्थः। प्रत्ययादर्शनत्वात्सर्वादेशोऽयं लुक्। अगूढेति। अगुह् स त इति स्थिते क्सस्य कित्त्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे क्सलुकि अगुह् त इति स्थिते प्रक्रियां दर्शयति—ढत्वधत्वष्टुत्वढलोपदीर्घा इति। अघुक्षतेति। क्सलु-गभावे ढत्वभष्भावकत्वषत्वानीति भावः। अघुक्षातामिति। चलेः क्सादेशे क्सस्य कित्त्वेन गुणहेतुत्वाभावादूत्वाभावे ढत्वभष्भावकत्वषत्वेषु कृतेषु क्सस्याचीत्यन्त्यलोपे अतः परत्वाभावादातो ङित इति न भवतीति भावः। अघुक्षन्तेति। झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अन्त्यलोपाभावादतः परत्वाभावादात्मनेपदेष्वनत इत्यदादेशो न भवति। कृते तु झोऽन्तादेशे क्सस्यान्तलोप इति भावः। अघुक्षथाः अघुक्षाथाम् अघुक्षध्वम्। अघुक्षि। इति रूपाणि सिद्धवत्कृत्याह—अगुह्वहीति। दन्त्यादिप्रत्ययपरत्वात् क्सस्य लुङि अजादिप्रत्ययाभावात् ऊत्वाभावे रूपम्। अघुक्षावहीति। क्सलुगभावे ढत्वभष्भावकत्वषत्वानि। अतो दीर्घश्च। अघु-क्षामहीति। दन्त्यादिप्रत्ययपरत्वाभावान्न क्सलुक्। इति गूहत्यन्ताः स्वरितेतः।

उभयपदिन इति। ञित्वादिति भावः। श्रिञ्धातुः सेट्। शिश्रियतु-रिति। कित्त्वान्न गुणः। इयङ् शिश्रियुः। शिश्रयिथ शिश्रियथुः शिश्रिय। शि-श्राय—शिश्रय शिश्रियिव शिश्रियिम। शिश्रिये शिश्रियाते शिश्रियिरे। शिश्रियिषे शिश्रियाथे शिश्रियिढ्वे—शिश्रियिध्वे। शिश्रिये शिश्रियिवहे शिश्रियिमहे। श्रयि-तेति। श्रयिष्यति श्रयिष्यते। श्रयतु श्रयताम्। अश्रयत् अश्रयत। श्रयेत् श्रयेत श्रीयात्। श्रयिषीष्ट। लुङि विशेषमाह—णिश्रीति। अशिश्रियदिति।

**(२३६६) ऋद्धनोः स्ये । ७ । २ । ७०॥** ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति । **(२३६७) रिङ् शयग्लिङ्क्षु । ७ । ४ । २८॥** शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधि-सामर्थ्याद्दीर्घो न । भ्रियात् । **( २३६८ ) उश्च । १ । २ । १२ ॥** ऋवर्णात्परौ झलादी लिङ् तङ्परः सिचेत्येतौ कितौ स्तः । भृषीष्ट भृषीयास्ताम् । अभार्षीत्

---

चङीति द्वित्वम् । अशिश्रियत । अश्रयिष्यत् अश्रयिष्यत । भृञ्धातुरनिट् । **भर-तीति** । भरते इत्यपि ज्ञेयम् । **बभ्रुतुरिति** । कित्त्वान्न गुणः । यण् । बभ्रुः । थलादौ 'एकाचः' इति नेट्, कृसृभृवृस्तुद्रुस्रुश्रुषु लिट्यपि तन्निषेधस्य प्रवृत्तेः । थलि अचस्तास्वदिति निषेधाच्च, ऋदन्तेषु भारद्वाजमतेऽपि थलि निषेधाच्च । तदाह— **बभर्थेति** । बभ्रथुः बभ्र । बभार--बभर । इति सिद्धवत्कृत्याह—**बभृवेति** । बभृम । बभ्रे बभ्राते बभ्रिरे । इति सिद्धवत्कृत्याह—**बभृषे इति** । बभ्राथे बभृढ्वे । बभ्रे बभृवहे बभृमहे ।

लृटि स्ये इण्निषेधे प्राप्ते—**ऋद्धनोः** । ऋत् हन् अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी । स्ये इति षष्ठ्यर्थे सप्तमी । आर्धधातुकस्येडित्यतः इडित्यनुवर्तते । तदाह— **ऋत इत्यादिना** । एकाच इति इण्निषेधस्यापवादः । **भरिष्यतीति** । भरिष्यते। भरतु भरताम् । अभरत् अभरत । भरेत् भरेत । आशीर्लिङि परस्मैपदे भृ यात् इति स्थिते—**रिङ् शय** । श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम् । 'अयङ् यि क्ङिती'त्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम् । तदादिविधिः । शे तु यीति नान्वेति, असंभवात् । नापि यकि, अव्यभिचारात् । अत एव अकृत्सार्व-धातुकयोरित्यनुवृत्तमपि लिङ एव विशेषणम् । तदाह—**शे यकीत्यादिना** । **ऋत इति** । 'रीङृत' इत्यतः तदनुवृत्तेरिति भावः । अङ्गस्येत्यधिकृतम् । ऋत इति तद्विशेषणम् । तदन्तविधिः । ऋदन्तस्याङ्गस्येति लभ्यते । आदेशे ङकार इत् । ङित्त्वात् अन्तादेशः । निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इडा-गमेनैव सिद्धे रेफोच्चारणं च स्पष्टार्थम् । ननु भ्रियादिति वक्ष्यमाणमुदाहरणम-युक्तम्, कृते रिङि 'अकृत्सार्वधातुकयो'रिति दीर्घप्रसङ्गादित्यत आह—**रीङि प्रकृते इति** । कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः स्यात्, 'रीङृत' इत्येव सिद्धेः । अतो रिङि कृते सति न दीर्घ इत्यर्थः । **भ्रियादिति** । भ्रियास्ता-मित्यादि सुगमम् ।

आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते—**उश्च** । 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते । 'इको झल्' इत्यतो झलिति च । तदाह—**ऋवर्णादिति** । **भृषीष्टेति** । कित्त्वान्न गुणः । **अभार्षीदिति** । परस्मैपदे सिचि वृद्धौ रपरत्वम् । तङि तु अभृ स् त इति स्थिते—**ह्रस्वादङ्गात्** । ह्रस्वान्तादित्यर्थः । सिच इति

**अभार्षीम् अभार्षुः** । ( २३६९ ) **ह्रस्वादङ्गात्** । ८ । २ । २७ ॥ **सिचो लोपः स्याज्झलि** । अभृत । अभृषाताम् । अभरिष्यत् । हृञ् ८९९ **हरणे** । **हरणं प्रापणं स्वीकारः स्तेयं नाशनं च** । **जहर्थ** । **जह्रिव** । जह्रिषे । हर्ता । **हरिष्यति** । धृञ् ९०० धारणे । धरति । अधार्षीत् । अधृत । णीञ् ९०१ प्रापणे । **निनयिथ–निनेथ निन्यिषे** ।

अथाजन्ताः परस्मैपदिनः । धेट् ९०२ पाने । धयति । (२३७०) **आदेच उपदेशेऽशिति** । ६ । १ । ४५ ॥ उपदेशे एजन्तस्य धातोरात्त्वं स्यान्न तु

---

भाष्यम् । 'झलो झलि' इत्यतो झलीति 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**सिचो लोपः स्याज्झलीति** । ह्रस्वात्किम् । अच्योष्ट । अङ्गात्किम् । अलाविष्टाम् । सिचः किम् । द्विष्टराम् । द्विष्टमाम् । सुजन्तात्तरसमपौ । **अभृतेति** । 'उश्च' इति सिचः कित्त्वान्न गुणः । झलीत्युक्तेः अभृषाताम् अभृषतेत्यत्र न सिज्लोपः । अनतः परत्वात् झस्य अदादेशः । अभृथाः अभृषाथाम् अभृढ्वम् । अभृषि अभृष्वहि अभृष्महि । हृधातुरनिट् । हरणं चतुर्विधमित्याह—**प्रापणमित्यादि** । तद्यथा—भारं हरति, प्रापयतीत्यर्थः । अंशं हरति, स्वीकरोतीत्यर्थः । परस्वं हरति, चोरयतीत्यर्थः । पापं हरति हरते वा, नाशयतीत्यर्थः । जहार जहतुः जहुः । 'एकाचः' इति इण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते 'अचस्तास्वत्' इति तन्निषेधः । ऋदन्तत्वेन भारद्वाजमतेऽपि इण् निषेध एव । तदाह—**जहर्थेति** । जहथुः जह । जहार–जहर । इति सिद्धवत्कृत्याह—**जह्रिवेति** । क्रादिनियमादिट् । जह्रिम । जह्रिषे । क्रादिनियमादिट् । जह्राथे जह्रिढ्वे—जह्रिध्वे । जह्रे जह्रिवहे जह्रिमहे । लुङादिषु भृञ इव रूपाणि । धृञ्धातुरनिट् । हृञ इव रूपाणि । णीञ्धातुरनिट् णोपदेशः । नयति नयते । निनाय निन्यतुः निन्युः । क्रादिनियमाल्लिटि इट् । थलि तु 'अचस्तास्वत्' इति इण्निषेधस्य भारद्वाजनियमादिड्विकल्प इत्यभिप्रेत्याह—**निनयिथ निनेथेति** । निन्यिषे निन्याथे निन्यिढ्वे—निन्यिध्वे । निन्ये निन्यिवहे निन्यिमहे । नेता । नेष्यति नेष्यते । नयतु नयताम् । अनयत् अनयत । नयेत् नयेत । नीयात् नेषीष्ट । अनैषीत् अनेष्ट । अनेष्यत् अनेष्यत इत्यजन्ता उभयपदिनो गताः ।

**परस्मैपदिन इति** । जि ज्रि अभिभवे इत्येतत्पर्यन्ता इति शेषः । **धेट् पाने इति** । स्तनंधयीत्यादौ ङीबर्थं टित्त्वम् अवयवे टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति हरदत्तः । **आदेचः । एजन्तस्य धातोरिति** । 'लिटि धातोः' इत्यतः धातोरित्यनुवृत्तं एचा विशेष्यते, तदन्तविधिरिति भावः । **न तु शितीति** । श् चासौ इच्चेति कर्मधारयात्सप्तमी, प्रत्ययविशेषणत्वात्तदादिविधिः, **इत्संज्ञकशका-**

---

१ 'विभाषेटः' इति पाठः ।

शिति। **(२३७१) आत औ णलः। ७।१।३४॥** आदन्ताद्धातोर्णल औकारादेशः स्यात्। दधौ **(२३७२) आतो लोप इटि च। ६।४।६४॥** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात्। द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' (सू २२४३) इति निषेधः। द्वित्वे कृते आल्लोपः।

---

रादौ प्रत्यये परे इति लभ्यते। 'ल्यपि च' 'न व्यो लिटि' इत्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या प्रत्यये इति विशेष्यलाभः। अशितीति न पर्युदासः। तथा सति शिद्भिन्ने प्रत्यये परे इत्यर्थः स्यात्। ततश्च सुग्लः इत्यत्र ग्लैधातोः 'आतश्चोपसर्गे' इति कप्रत्ययो न स्यात् कप्रत्ययनिमित्तमात्त्वम् आदन्तात्प्रत्यय इत्यन्योन्याश्रयात्। शिति नेति प्रसज्यप्रतिषेधे तु आत्त्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तकत्वाभावात् प्रथममात्त्वे कृते कप्रत्ययः सूपपादः। शितीति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि 'भावकर्मणोः' इति तङि एशि आत्त्वे आतो लोपे जग्ले इति न सिध्येत्, एशः शित्त्वेन तस्मिन्परे आत्त्वस्य निषेधात्। अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थ आश्रितः। एवंच पर्युदासेऽपि न क्षतिः। इत्संज्ञकशकारादिभिन्नप्रत्यये विवक्षिते इत्याश्रयणेन सुग्ल इत्यत्र कप्रत्ययात्प्रागेव आत्त्वोपपत्तेः। उपदेशे किम्? चेता, स्तोता। धातोः किम्? गोभ्याम्। 'गमेर्डोः' इति डोप्रत्ययोपदेशात् उपदेशे यः एच् तदन्तत्वात् गो इत्यस्य प्राप्तिः। न च मेङादीनामुपदेशे एजन्तत्वाभावात् कथमात्त्वमिति न शङ्क्यम्, 'उदीचां माङः' इति निर्देशेन 'नानुबन्धकृतमनेजन्तत्वम्' इति ज्ञापनादित्यास्तां तावत्।

तथाच प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते—**आत औ**। औ इति लुप्तप्रथमाकम्। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। आत इति तद्विशेषणम्। तदन्तविधिः। तदाह—**आदन्ताद्धातोरिति**। णल्प्रकृतिश्च धातुरेवेति धातुग्रहणम्। तथाच णल औत्वे वृद्धौ रूपमाह—**दधाविति**। दधा अतुसिति स्थिते—**आतो लोपः**। आर्धधातुके इत्यधिकृतम्। 'दीङो युडि'त्यतः अचि क्ङितीति चानुवर्तते। अचीत्यार्धधातुकविशेषणत्वात्तदादिविधिः। क्ङिति अजाद्यार्धधातुके इटि च आतो लोप इति लभ्यते। फलितमाह—**अजाद्योरिति**। इटः आर्धधातुकत्वं तु तदवयवत्वाद्बोध्यम्। क्ङितीति च इटो न विशेषणम्, इड्ग्रहणसामर्थ्यात्। इडित्यनेन उत्तमपुरुषैकवचनम् इडागमश्च गृह्यते[1]। अजाद्योः किम्? ग्लैधातोः कर्मणि लटि यकि ग्लायते। आर्धधातुकयोः किम्? यान्ति वान्ति। दधौ इत्यत्र तु क्ङित्त्वाभावान्नाल्लोपः। सति तस्मिन् औत्वं न स्यात्। ननु धा अतुस् इति स्थिते द्वित्वात्परत्वादाल्लोपे सति एकाच्त्वाभावात् द्वित्वं न स्यादित्याश-

---

१ वस्तुतस्तु उत्तमैकवचनस्येटः अजादि कित्यन्तर्भावा दिडागम एवात्र गृह्यते।

दधतुः दधुः। दधिथ-दधाथ। दधिव दधिम। धाता। (२३७३) **दाधा घ्वदाप्**। १। १। २०॥ दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। (२३७४) **एर्लिङि**। ६। ४। ६७॥ घुसंज्ञानां मास्थादीनां चैत्वं स्यादार्धधातुके किति लिङि। धेयात् धेयास्ताम् धेयासुः। (२३७५) **विभाषा धेट्श्व्योः**। ३। १। ४९॥ आभ्यां च्लेश्चङ्वा स्यात्कर्तृवाचिनि लुङि परे। 'चङि' (सू २३१५) इति द्वित्वम्। अदधत् अदधताम्। (२३७६) **विभाषा घ्राधेट्शाच्छासः**। २। ४। ७८॥ एभ्यः सिचो लुग्वा स्यात्पर-

---

क्षय परिहरति—**द्वित्वादित्यादिना**। धेट्धातुरनिट्। भारद्वाजनियमात् थलि वेडित्याह—**दधिथ दधाथेति**। इट्पक्षे आल्लोपः। दधथुः दध। दधौ। इति सिद्धवत्कृत्याह—**दधिवेति**। वसि आत्त्वे क्रादिनियमादिटि आल्लोप इति भावः। दधिमेत्यपि एवं ज्ञेयम्। **धातेति**। लुटि आत्त्वे तासादि इति भावः। धास्यति। धयतु। अधयत्। धयेत्।

आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन् घुसंज्ञां दर्शयति—**दाधा घ्वदाप्**। देत्यनेन स्वाभाविकाकारान्तयोः 'डु दाञ् दाने' 'दाण् दाने' इत्यनयोः, कृतात्वयोः 'दो अवखण्डने' 'देङ् रक्षणे' इत्यनयोः लाक्षणिकयोश्च, धेत्यनेन स्वाभाविकाकारान्तस्य 'डु धाञ् धारणपोषणयोः' इत्यस्य, लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम्। 'गामादाग्रहणेष्वविशेषः' इति परिभाषाबलात् तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च। अत एव 'दो दद् घोः' इत्यत्र धेरिनवृत्त्यर्थं दाग्रहणमर्थवत्, दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः। तदाह—**दारूपा धारूपाश्चेति**। **एर्लिङि**। एरिति प्रथमान्तम्। आर्धधातुके इत्यधिकृतम्। घुमास्थागापाजहातिसाम् इत्यनुवर्तते। घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठीबहुवचनम्। तदाह—**घुसंज्ञानां मास्थादीनामिति। किति लिङीति**। 'दीङो युडि'त्यतः कितीत्यनुवृत्तेरिति भावः। ङितीति नानुवर्तते। लिङार्धधातुकस्य ङित्त्वासंभवात्।

लुङि च्लेः सिचि प्राप्ते—**विभाषा धेट्**। च्लि लिङीत्यनुवर्तते। 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि चङिति च। तदाह—**आभ्यामिति**। धेट् श्वि आभ्यामित्यर्थः। **अदधदिति**। चङि द्वित्वे आल्लोप इति भावः। अदधताम् अदधन्। अदधः अदधतम् अदधत। अदधम् अदधाव अदधाम। चङभावपक्षे विशेषमाह—**विभाषा घ्रा**। 'ण्यक्षत्रियार्ष' इत्यतः लुगित्यनुवर्तते। 'गातिस्था' इत्यतः सिचः परस्मैपदेष्विति। तदाह—**एभ्य इति**। 'घ्रा गन्धोपादाने' 'धेट् पाने' 'शो तनूकरणे' 'छो छेदने' 'षो अन्तकर्मणि' एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। शोप्रभृतीनां कृतात्त्वानां निर्देशः। धेटः 'गातिस्थाघुपा' इति नित्यं प्राप्ते अन्येषामप्राप्ते वचनम्। **अधुरिति**। 'उस्यपदान्तात्' इति पर-

स्मैपदे परे। अधात् अधाताम् अधुः। (२३७७) **यमरमनमातां सक्च।** ७।२।७३॥ एषां सक्स्यादेभ्यः सिच इट् च परस्मैपदेषु। अधासीत् अधासिष्टाम् अधासिषुः। ग्लै १०३ म्लै १०४ हर्षक्षये। हर्षक्षयो धातुक्षयः। ग्लायति। जग्लौ। जग्लिथ—जग्लाथ। (२३७८) **वाऽन्यस्य संयोगादेः।** ६।४।६८॥ घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्त्वं वा स्यादार्धधातुके किति लिङि। ग्लायात्—ग्लेयात्। अग्लासीत्। म्लायति। द्यै १०५ न्यक्क-

---

रूपम्। अधाः अधातम् अधात। अधाम् अधाव अधाम। सिचो लुगभावपक्षे आह—**यमरम**। यम, रम, नम, आत् एषां द्वन्द्वात्षष्ठीबहुवचनम्। आदित्यनेन आदन्तं गृह्यते। तदाह—**एषां सक् स्यादिति**। सकि ककार इत् अकार उच्चारणार्थः। कित्त्वादन्तावयवः। चकारेण 'इडत्त्यर्ति' इत्यतः इडिति 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदेष्विति चानुकृष्यते। अञ्जेः सिचीत्यतः सिचीति च। तच्च षष्ठ्या विपरिणम्यते। तदाह—**एभ्यः सिच इट् चेति। अधासीदिति**। धातोः सगागमः। सिच इट्, ईट्, 'इट ईटि' इति सिज्लोपः। **अधासिष्टामिति।** अपृक्तत्वाभावादीडभावान्न सिज्लोपः। सस्य षत्वे तकारस्य ष्टुत्वेन टः। **अधासिषुरिति**। अधासीः अधासिष्टम् अधासिष्ट। अधासिषम् अधासिष्व अधासिष्म। यद्यपि अधासीदित्यत्र सगिटोर्विधिर्व्यर्थ एव, तथापि अधासिष्टामित्याद्यर्थं आतः सगिड्विधानम्। यमादीनां तु अयंसीत्यादौ हलन्तलक्षणवृद्धेरभावार्थम्, अयंसिष्टामित्याद्यर्थं च। तदेतत् तत्तद्धातुषु स्पष्टीभविष्यति। अधास्यत्।

**ग्लै म्लै हर्षक्षये। धातुक्षय इति**। बलक्षय इत्यर्थः। अनिटाविमौ। **ग्लायतीति**। शपि आयादेशः। शिद्विषयत्वादात्त्वं न। **जग्लाविति**। णलि आत्त्वे 'आत औ णलः' इति औभावे वृद्धिरिति भावः। अतुसादौ द्वित्वे कृते आतो लोपः। जग्लतुः जग्लुः। भारद्वाजनियमात्थलि वेडित्याह—**जग्लिथ जग्लाथेति**। इट्पक्षे आल्लोपः। जग्लथुः जग्ल। जग्लौ जग्लिव जग्लिम। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्। आशीर्लिङि आत्त्वे कृते ग्ला यात् इति स्थिते—**वाऽन्यस्य**। आर्धधातुक इत्यधिकृतम्। 'एर्लिङि' इत्यनुवर्तते। एरिति प्रथमान्तम्। 'आतो लोप इटि च' इत्यतः आत इत्यनुवर्तते। कस्मादन्यस्येत्यपेक्षायां घुमास्थागापाजहातिसां हलीति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते। तदाह—**घुमास्थादेरित्यादिना। कितीति**। 'दीङो युडचि क्ङिति' इत्यतः तदनुवृत्तेरिति भावः। ङितीति तु नानुवर्तते, लिङार्धधातुकस्य ङित्त्वासंभवात्। **अग्लासीदिति**। यमरमेत्यादन्तत्वात् सगिटौ। अग्लासिष्टाम् अग्लासिषुरित्यादि। अग्लास्यत्। **म्लायतीति**। ग्लैधातोरिव रूपाणीति भावः। **द्यै न्यक्करणे इति**। यकारमध्योऽयम्। इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि। 'रै शब्दे' इत्यादीनां तु असंयोगादीनाम् आ-

**रणो न्यक्करणं तिरस्कारः। द्रै १०६ स्वप्ने। ध्रै १०७ तृप्तौ। ध्यै १०८ चिन्तायाम्। रै १०९ शब्दे। स्त्यै ११० ष्ट्यै १११ शब्दसंघातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु तिष्ठ्यासति अतिष्ठ्यपदित्यत्र षत्वम्। खै ११२ खदने। त्रै ११३ जै ११४ षै ११५ क्षये। त्रायति। जजौ। ससौ। साता। 'घुमास्था—' (सू २४६२) इत्यत्र 'विभाषा घ्राधेट्—' (सू २३७६) इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य। तेन एत्त्वसिज्लुकौ न। सायात्। असासीत्। कै ११६ गै ११७ शब्दे। गेयात्। अगासीत्। शै ११८ श्रै ११९ पाके। पै १२० ओ वै १२१ शोषणे। पायात्। अपासीत्। 'घुमास्था—' (सू २४६२) इतीत्त्वं, तदपवाद 'एर्लिङि' (सू २३७४) इत्येत्त्वं, 'गातिस्था'**

---

शीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्त्वं न भवति, रायादित्यादि रूपमिति विशेषः।

**स्त्यै ष्ट्यै इति।** षोपदेशेषु स्त्याधातोः पर्युदासादाद्यो न षोपदेशः। द्वितीयस्तु षोपदेशः। तकारस्य ष्टुत्वसंपन्नटकारनिर्देशः। **सत्वे कृते इति।** धात्वादेरिति षस्य सकारे सति निमित्तापायात् ष्टुत्वनिवृत्तिरिति भावः। **तिष्ठ्यासतीति** ष्ट्यैधातोः कृतसत्वात् सनि आत्त्वे स्त्या स इति सन्नन्ताल्लटि तिपि शपि 'सन्यङोः' इति द्वित्वे 'शर्पूर्वाः खयः' इति सकारयकारनिवृत्तौ तास्त्यासति इति स्थिते अभ्यासह्रस्वे 'सन्यतः' इति इत्वे सकारस्य इणः परत्वादादेशसकारत्वाच्च षत्वे तिष्ठ्यासतीति रूपम्। स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाभावात् षत्वं न स्यादिति भावः। **अतिष्ठ्यपदिति।** ष्ट्यैधातोः कृतसत्वात् णौ आत्त्वे 'अर्तिह्री' इति पुकि स्त्यापि इति णयन्तात् लुङि अडागमे तिपि 'इतश्च' इति इकारलोपे 'णिश्रिद्रुस्रुभ्यः' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधायाः' इति ह्रस्वे 'चङि' इति स्त्यप् इत्यस्य द्वित्वे शर्पूर्वा इति सकारयकारपकाराणां निवृत्तौ सत्यां 'सन्यतः' इति इत्वे इणः परत्वादादेशसकारत्वाच्च सस्य षत्वे तस्य ष्टुत्वे अतिष्ठ्यपदिति रूपम्। स्वाभाविकसकारत्वे त्वादेशसकारत्वाभावात् षत्वं न स्यादिति भावः। **जजौ ससाविति।** जैधातोः षैधातोश्च णलि आत्त्वे द्वित्वादौ वृद्धिरिति भावः। ननु 'एर्लिङि' इत्यत्र 'घुमास्थागापाजहातिसाम्' इत्यनुवृत्त्या सैधातोराशीर्लिङि सायादित्यत्र एत्त्वं स्यात्। तथा लुङि सगिटोः असासीत् असासिष्टामित्येव इष्यते। तत्र 'विभाषा घ्राधेट्शाच्छासः' इति सिचः पाक्षिके लुकि असात् असातामित्यपि प्रसज्येतेत्यत आह—**घुमास्थेत्यत्रेत्यादि। स्यतेरिति।** षो अन्तकर्मणि इति श्यन्विकरणस्येत्यर्थः। अत्र व्याख्यानमेव शरणम्। 'विभाषा घ्राधेट्' इत्यत्र श्यन्विकरणाभ्यां साहचर्याच्च।

**पै ओ वै शोषणे।** पायति। वायति। 'ओदितश्च' इति निष्ठानत्वार्थमोदित्त्वम्। ननु पैधातोः कर्मणि लटि यकि आत्त्वे पायते इत्यत्र 'घुमास्थागापाजहातिसां

(सू २२२३) इति सिज्लुक् च न। पारूपस्य लाक्षणिकत्वात्। ष्टै ९२२ वेष्टने। स्तायति। ष्णै ९२३ वेष्टने। शोभायां च इत्येके। स्नायति। दैप् ९२४ शोधने। दायति। अघुत्वादेत्त्वसिज्लुकौ न। दायात्। अदासीत्। पा ९२५ पाने। 'पाघ्राध्मा—' (सू २३६०) इति पिबादेशः। तस्यादन्तत्वाल्लोपधागुणः। पिबति। पेयात्। अपात्। घ्रा ९२६ गन्धोपादाने। जिघ्रति। घ्रायात्—घ्रेयात्। अघ्रात्—अघ्रासीत्। ध्मा ९२७ शब्दाग्निसंयोगयोः। धमति। ष्ठा ९२८ गतिनिवृत्तौ। तिष्ठति। 'स्थादिष्वभ्यासेन—' (सू २२७७) इति षत्वम्। अधितष्ठौ 'उपसर्गात्—' (सू २२७०) इति षत्वम्। अधिष्ठाता। स्थेयात्। म्ना ९२९ अभ्यासे। मनति। दाण् ९३० दाने। प्रणियच्छति।

---

हलि' इति ईत्त्वं स्यात्। तथा आशीर्लिङि पायात् इत्यत्र 'एर्लिङि' इति एत्त्वं स्यात्, तत्रापि 'घुमास्थागापाजहातिसाम्' इत्यनुवृत्तेः। तथा लुङि अपासीदित्यत्र 'गातिस्था' इति सिचो लुकि 'यमरम' इति इटः अभावात्तत्संनियोगशिष्टः सगपि न स्यादित्यत आह—**घुमास्थेतीत्त्वमित्यादिना। पारूपस्येति**। उदाहृतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आदन्तत्वेन उपदिष्टस्यैव पाधातोर्ग्रहणम्, नतु पैधातोः कृतात्वस्येति भावः। एवंच प्रकृते पैधातोराशीर्लिङि पायादित्येव रूपम्। लुङि सगिटोः अपासीत्, अपासिष्टामित्येव रूपम्। **ष्टै वेष्टने इति**। षोपदेशोऽयम्। कृतष्टुत्वनिर्देशः। सत्वे कृते ष्टुत्वनिवृत्तिः। तदाह—**स्तायतीति**। ष्णैधातुरपि षोपदेशः कृतष्टुत्वनिर्देशः। सत्वे कृते ष्टुत्वनिवृत्तिः। तदाह—**स्नायतीति। दैप् शोधने। अघुत्वादिति**। घुसंज्ञाविधौ दाब्दैपौ विनेत्युक्तेरिति भावः। **पा पाने। पिबादेश इति**। शिद्विषय इति शेषः। **तस्येति**। पिबादेशस्य अदन्तत्वात् न लघूपधगुण इति भाष्ये स्पष्टम्। अनिडयम्। पपौ पपतुः पपुः। भारद्वाजनियमात् थलि वेट्—पपिथ-पपाथ पपथुः पप। पपौ पपिव पपिम। क्रादिनियमादिट्। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। आशीर्लिङि 'एर्लिङि' इत्येत्त्वमभिप्रेत्याह—**पेयादिति**। 'गातिस्था' इति सिचो लुगित्यभिप्रेत्याह—**अपादिति**। अपाताम् अपुः। अपाः अपातम् अपात। अपाम् अपाव अपाम। अपास्यत्।

**घ्रा गन्धोपादाने**। 'पाघ्राध्मा' इति शिद्विषये जिघ्रादेशः। तदाह—**जिघ्रतीति**। अनिडयम्। जघ्रौ जघ्रतुः जघ्रुः। भारद्वाजनियमात् थलि वेट्—जघ्रिथ-जघ्राथ जघ्रथुः जघ्र। जघ्रौ जघ्रिव जघ्रिम। क्रादिनियमादिट्। घ्राता। घ्रास्यति। जिघ्रतु। अजिघ्रत्। जिघ्रेत्। आशीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्त्वविकल्पं मत्वा आह—**घ्रायात् घ्रेयादिति**। 'विभाषा घ्राधेट्' इति सिचो वा लुक्। लुगभावपक्षे आदन्तत्वात्सगिटौ। तदाह—**अघ्रात् अघ्रासीदिति**। ध्माधातुरनिट्। 'पाघ्राध्मा' इति शिद्विषये धमादेशः। तदाह—**धमतीति**। दध्मौ दध्मतुः दध्मुः। दध्मिथ—दध्माथ दध्मथुः दध्म। दध्मौ दध्मिव दध्मिम।

देयात्। अदात्। ह्वृ ९३१ कौटिल्ये। ह्वरति। (२३७९) **ऋतश्च संयोगादेर्गुणः** ।७।४।१०॥ ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वाण्णल्यपि भवति। रपरत्वम्। उपधावृद्धिः। जह्वार जह्वरतुः जह्वरुः। जह्वर्थ। ह्वर्ता। 'ऋद्धनोः स्ये' (सू २३६६) ह्वरिष्यति।

---

ध्माता। ध्मास्यति। धमतु। अधमत्। धमेत्। ध्मायात्-ध्मेयात्। अध्मासीत्। अध्मास्यत्।

ष्ठाधातुः षोपदेशः कृतष्टुत्वनिर्देशः। शिद्विषये 'पाघ्रा' इति तिष्ठादेशः। तदाह—**तिष्ठतीति**। तस्थौ। अधितष्ठावित्यत्र इण्कवर्गाभ्यां परत्वाभावेऽपि षत्वमाह—**स्थादिष्वित्ति**। तस्थतुः तस्थुः। तस्थिथ-तस्थाथ तस्थथुः तस्थ। तस्थौ तस्थिव तस्थिम। स्थाता। अधिष्ठातेत्यत्र 'सात्पदाद्योः' इति षत्वनिषेधमाशङ्क्याह—**उपसर्गादिति षत्वमिति**। स्थास्यति। तिष्ठतु। अतिष्ठत्। तिष्ठेत्। आशीर्लिङि संयोगादित्वेऽपि घुमास्थादेरन्यत्वाभावादेत्त्वविकल्पो न, किंतु 'एर्लिङि' इति नित्यमेव एत्त्वम्। तदाह—**स्थेयादिति**। 'गातिस्था' इति सिचो लुक्। अस्थात्। अस्थास्यत्। **म्ना अभ्यासे इति**। अयमप्यनिट्। 'पाघ्रा' इति शिद्विषये मनादेशः। तदाह—**मनतीति**। मम्नौ मम्नतुः मम्नुः। मम्निथ-मम्नाथ मम्नथुः मम्न। मम्नौ मम्निव मम्निम। म्नाता। म्नास्यति। मनतु। अमनत्। मनेत्। म्नायात्-म्नेयात्। अम्नासीत्। अम्नास्यत्। **दाण् दाने इति**। अयमप्यनिट्। 'पाघ्रा' इति शिद्विषये यच्छादेशः। **प्रणियच्छतीति**। 'नेर्गद' इति णत्वम्। ददौ ददतुः ददुः। ददिथ—ददाथ ददथुः दद। ददौ ददिव ददिम। दाता। दास्यति। यच्छतु। अयच्छत्। यच्छेत्। आशीर्लिङि 'एर्लिङि' इत्येत्त्वं मत्वा आह—**देयादिति**। 'गातिस्था' इति सिचो लुकं मत्वा आह—**अदादिति**।

**ह्वृ कौटिल्ये इति**। अयमप्यनिट्। **ह्वरतीति**। शपि गुणे रपरत्वम्। **ऋतश्च**। **लिटीति**। 'दयतेर्दिगि लिटि' इत्यतः तदनुवृत्तेरिति भावः। ननु तिप्सिप्मिप्सु सार्वधातुकार्धधातुकयोरित्येव गुणे सिद्धे किमर्थमिदमित्यत आह—**किदर्थमपीदमिति**। अतुसादिकिदर्थं णलाद्यकिदर्थं चेत्यर्थः। ननु अस्य गुणस्य अतुसादिषु चरितार्थत्वात् णलि 'अचो ञ्णिति' इति वृद्धिप्रसङ्गात्कथं णलि अयं गुण इत्यत आह—**परत्वाण्णल्यपि भवतीति**। 'अचो ञ्णिति' इति वृद्ध्यपेक्षया अस्य गुणस्य परत्वादित्यर्थः। तर्हि जह्वार इति कथमित्यत आह—**उपधावृद्धिरिति**। 'अत उपधाया' इत्यनेनेति शेषः। **जह्वर्थेति**। क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च निषेधादिति भावः। जह्वरथुः जह्वर। जह्वार—जह्वर जह्वरिव जह्वरिम। क्रादिनियमादिट्। ह्वरतु। अह्वरत्। ह्वरेत्। आशीर्लिङि ह्वृ यात् इति स्थिते कित्त्वाद्गुणनिषेधे प्राप्ते—

---

१ संयोगाद्यकारान्ताः ह्वृ, ध्वृ, स्वृ, स्मृ, स्तृ, स्पृ, इति षट्।

(२३८०) **गुणोऽर्तिसंयोगाद्योः** । ७ । ४ । २९ ॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्यायकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् । स्वृ ९३२ शब्दोपतापयोः । 'स्वरतिसूति—' ( सू २२७९ ) इति वेट् । सस्वरिथ-सस्वर्थ । वमयोस्तु—(२३८१) **श्र्युकः किति** ।७।२।११॥ श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव सस्वरिम । परत्वात् 'ऋद्धनोः स्ये' ( सू २३६६ ) इति नित्यमिट् । स्वरिष्यति । स्वर्यात् । अस्वारीत् अस्वारिष्टाम् । अस्वार्षीत् अस्वा-

---

**गुणोऽर्ति** । भौवादिकः जौहोत्यादिश्च ऋधातुः अर्तीत्यनेन गृह्यते । लुका निर्देशस्तु न विवक्षितः । अङ्गस्येत्यधिकृतम् । 'रीङृतः' इत्यतः ऋत इत्यनुवर्तते । तच्च अङ्गविशेषणं तदन्तविधिः ऋदन्तस्याङ्गस्येति लभ्यते । संयोगाद्योरित्यपि तद्विशेषणम्। 'अकृत्सार्वधातुकयोः' इत्यतः असार्वधातुकग्रहणमनुवर्तते। आर्धधातुके इति लभ्यते। 'रिङ् शयग्लिङ्क्षु' इत्यतः यकि लिङीति च लभ्यते । 'अयङ्यि क्ङिति' इत्यतः यीति सप्तम्यन्तमनुवर्तते । आर्धधातुकविशेषणत्वात्तदादिविधिः । तदाह—**अर्तेरित्यादिना** । तथाच हृ यात् इति स्थिते गुणे रपरत्वे रूपमाह—**ह्वर्यादिति** । **अह्वार्षीदिति** । सिचि वृद्धिः रपरत्वं षत्वम् । अह्वरिष्यत् ।

**स्वृ शब्दोपतापयोरिति** । अयमप्यनिट् । स्वरति । लिटि तु कित्यपि गुणः । णलि तु कृते गुणे रपत्वे उपधावृद्धिः । सस्वार सस्वरतुः सस्वरुः । थलि तु क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च नित्यनिषेधे प्राप्ते आह—**स्वरतिसूतीति वेडिति । सस्वरिथ सस्वर्थेति** । सस्वरथुः सस्वर । सस्वार-सस्वर । इत्यपि ज्ञेयम् । **वमयोस्त्विति** । क्रादिनियमान्नित्यमिडित्यन्वयः । अत्र इण्निषेधं शङ्कितुमाह—**श्र्युकः किति** । श्रिश्च उक् चेति समाहारद्वन्द्वात् षष्ठी । उक् प्रत्याहारः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणतम् उका विशेष्यते । तदन्तविधिः । 'एकाच उपदेशे' इत्यतः एकाच इत्यनुवृत्तं इगन्तेऽन्वेति । 'नेड्वशिकृति' इत्यतो नेडिति । किर्तीति सप्तमी षष्ठ्यर्थे । ग्च क्च क्‍ौ तौ इतौ यस्येति विग्रहः । गकारस्य चर्त्वेन निर्देशः । तदाह—**श्रिञ एकाच इत्यादिना** । गकारप्रश्लेषः किम् । भूष्णुः । 'ग्लाजिस्थश्च ग्स्नुः' इति चकाराद्भूधातोः ग्स्नुः । तस्य गित्त्वादिट् न । कित्त्वे तु स्थास्नुरित्यत्र 'घुमास्था' इति ईत् स्यात् । इण्न स्यादित्यनन्तरं अनेन निषेधे प्राप्ते इत्यन्वयः ।

**नन्वियं शङ्का न युज्यते** । 'श्र्युकः किति' इति निषेधं बाधित्वा परत्वात् स्वरतिसूतीति, विकल्पस्य प्राप्तेरित्यत आह—**परमपीत्यादि सामर्थ्यादित्यन्तम्** । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्परमपि स्वरत्यादिविकल्पं बाधित्वा

ष्टाम् । स्मृ ९३३ चिन्तायाम् । ह्वृ ९३४ संवरणे । सृ ९३५ गतौ । क्रादित्वान्नेट् । ससर्थ । ससृव । रिङ् । स्रियात् । असार्षीत् । असार्ष्टाम् । (२३८२) **सर्तिशास्त्यर्तिभ्यश्च । ३ । १ । ५६ ॥** एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि । इह लुसशपा शासिना साहचर्यात् सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु 'पाघ्राध्मा' ( सू २३६० ) इति शिति धौरादेशः । धावति । ऋ ९३६ गतिप्रापणयोः । ऋच्छति । (२३८३) **ऋच्छत्यृताम् । ७ । ४ । ११ ॥** तौदादिकस्य ऋच्छतेः ऋधातोः ॠतां च गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः । आर आरतुः आरुः । (२३८४) **इडत्त्यर्तिव्ययतीनाम् ।**

---

अनेन निषेधे प्राप्ते इत्यन्वयः । आर्धधातुकस्येडित्यादिविधिकाण्डात्प्रागेव 'नेड्वशि कृति' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यात् 'स्वरति' इति विकल्पोऽप्यनेन बाध्यते इत्यर्थः । परमपीत्यादिः प्राप्ते इत्यन्तः शङ्काग्रन्थः । परिहरति—**क्रादिनियमान्नित्यमिडिति** । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावान् इण्निषेधः स लिटि चेत् तर्हि क्रादिभ्य एवेत्युक्तत्वादिति भावः । लुटि स्वरिता स्वर्ता । लृटि स्ये 'स्वरति' इति विकल्पं निरस्यति—**परत्वादिति** । स्वरतु । अस्वरत् । स्वरेत् । **स्वर्यादिति** । आशीर्लिङि 'गुणोऽर्तिसंयोगाद्योः' इति गुणः । **अस्वारीदिति** । 'स्वरति' इति इट्पक्षे वृद्धिरिति भावः । **अस्वार्षीदिति** । इडभावे 'सिचि वृद्धिः' इति वृद्धिरिति भावः । **स्मृ चिन्तायामिति** । अयमप्यनिट् । स्मरति । लिटि 'ऋतश्च' इति कित्यपि गुणः । णलि तु गुणे उपधावृद्धिः । सस्मार सस्मरतुः सस्मरुः । ऋदन्तत्वाद्भारद्वाजमतेऽपि क्रादिनियमप्राप्तस्य इटः थलि नित्यनिषेधः । सस्मर्थ सस्मरथुः सस्मर । सस्मार–सस्मर सस्मरिव सस्मरिम । स्मर्ता । लृटि स्ये 'ऋद्धनोः' इति इट्—स्मरिष्यति । स्मरतु । अस्मरत् । स्मरेत् । आशीर्लिङि 'गुणोऽर्ति' इति गुणः—स्मर्यात् । लुङि सिचि वृद्धौ रपरत्वम्—अस्मार्षीत् । अस्मरिष्यत् । **ह्वृ संवरणे इति** । अयमपि स्मृधातुवत् ।

**सृ गताविति** । ऋदन्तोऽयमनिट् । सरति लिटि संयोगादित्वाभावात् ऋतश्चेति गुणो न । ससार सस्रतुः सस्रुः । **क्रादित्वान्नेडिति** । सृधातोः क्रादिस्थत्वादिति भावः । **ससर्थेति** । क्रादित्वात्थल्यपि नित्यं निषेध इति भावः । सस्रथुः सस्र । ससार ससार सस्रृव सस्रम । इत्यपि ज्ञेयम् । सर्ता । लृटि 'ऋद्धनोः' इति इट्—सरिष्यति । सरतु । असरत् । सरेत् । आशीर्लिङि संयोगादित्वाभावात् 'गुणोऽर्ति' इति न गुणः । किंतु 'रिङ् शयग्लिङ्क्षु' इति रिङित्याह—**रिङिति । स्रियादिति** । रीङि प्रकृते रिङ्विधिसामर्थ्यान्न दीर्घ इति भावः । **असार्षीदिति** । सिचि वृद्धौ रपरत्वम् । अत्र च्लेरङमाशङ्कितुमाह—**सर्ति** । चिल

---

१ अर्थभेदात्पुनः पाठः । क्वचित्तु वृ संवरणे इति पाठः ।

७ । २ । ६६ ॥ अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता। अरिष्यति । अर्यात् । आर्षीत् आर्ष्टाम् । गृ ९३७ घृ ९३८ सेचने । गरति । जगार । जगर्थ । जघ्रिव । रिङ् । घ्रियात् । अगार्षीत् । ध्वृ ९३९ हूर्छने । स्रु

लुङीत्यनुवर्तते । 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि, चङिति । तदाह—**एभ्य इति ।** ततश्च प्रकृते असार्षीदित्यत्र अङ् स्यादिति शङ्का सूचिता । तां परिहरति—**इह लुप्तेत्यादिना ।** इह अङ्विधौ शास्तीत्यनेन लुप्तविकरणः शासिर्गृह्यते इति निर्विवादम्, तस्य विकरणान्तराभावात् । एवं च तत्साहचर्यात् सृधातुः ऋधातुश्च जौहोत्यादिकौ श्लुविकरणावेव गृह्येते इत्यर्थः, लुप्तविकरणत्वसाम्यादिति भावः । **तेनेति ।** लुप्तविकरणयोरेव ग्रहणेन भ्वादिगणस्थयोः सृधातुऋधात्वोरङ् नेत्यर्थः । तदेवं सृधातोर्गतिसामान्यवृत्तेरुक्तानि रूपाणि । यदि शीघ्रगतौ सृधातुः, तदा तस्य विशेषमाह—**शीघ्रगतौ त्विति । धौरादेश इति ।** धौशब्दस्य धौरिति प्रथमान्तम् । धौ इत्यौकारान्त आदेश इत्यर्थः । 'पाघ्रा' इति सूत्रे सर्तीति श्तिपा निर्देशः । लुप्तविकरणनिर्देशस्तु अविवक्षित इति भावः । 'सर्तेर्वेगितायां गतौ धावादेशः' इति वार्तिकमभिप्रेत्येदम् । **धावतीति ।** शपि सृधातोर्धौभावे आवादेशः । धावतु । अधावत् । धावेत् ।

**ऋगतिप्रापणयोः ।** अनिट् । 'पाघ्राध्मा' इति शिद्विषये ऋच्छादेशः । तदाह—**ऋच्छतीति ।** ननु ऋ अतुस् इति स्थिते द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ ऋ अतुस् इति स्थिते 'असंयोगात्' इति कित्त्वादुत्तरखण्डस्य गुणाभावे यणं बाधित्वा परत्वादादूगुणे अरतुरिति स्यादित्यतस्तत्र गुणविधानमाह—**ऋच्छत्यृताम् ।** 'दयतेर्दिगि लिटि' इत्यतो लिटीति 'ऋतश्च संयोगादेर्गुणः' इत्यतो गुण इति चानुवर्तते । ऋच्छति ऋ ऋत् एषां द्वन्द्वाद्बहुवचनम् । बहुवचनादेव ऋकारप्रश्लेषो गम्यते । प्रश्लिष्टेन च ऋकारेण ऋधातुरेव गृह्यते। ऋवर्णान्तधातुग्रहणे 'ऋतश्च संयोगादेर्गुणः' इत्यस्य वैयर्थ्यात् । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति तौदादिकस्य ऋच्छतीति श्तिपा निर्देशः । भौवादिकस्य धातोस्तु ऋग्रहणेनैव सिद्धेः । तदाह—**तौदादिकस्य ऋच्छतेरित्यादिना ।** किदर्थमपीदं सूत्रं परत्वादकित्यपि भवति । **णलि प्राग्वदिति ।** 'हृ कौटिल्ये' इत्यत्र उक्तया रीत्या किन्तु चरितार्थोऽप्ययं गुणः 'अचो ञ्णिति' इति वृद्ध्यपेक्षया परत्वात् णल्यपि भवति । ततो रपरत्वे उपधावृद्धिरित्यर्थः । **आरेति ।** ऋधातोर्लिटि तिपो णलि द्वित्वे उरदत्त्वे हलादिशेषे 'अत आदेः' इति दीर्घे उत्तरखण्डस्य वृद्धौ रपरत्वे सवर्णदीर्घ इति भावः । **आरतुरिति ।** पूर्ववत् द्वित्वादौ आ ऋ अतुसिति स्थिते कित्त्वादूगुणनिषेधे प्राप्ते 'ऋच्छत्यृताम्' इति गुणे रपरत्वे सवर्ण-

१ 'अस्यति वक्ति' इत्यतोऽङिति' पाठोऽत्रापेक्ष्यते ।

१४० गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। 'श्रिश्रि—' (सू २३१२) इति चङ्। लघूपधगुणादन्तरङ्गत्वादुवङ्। असुस्रुवत्। षु १४१ प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सुषोथ-सुषविथ। सुषुविव। सोता। (२३८५) स्तुसुधू-

---

दीर्घ इति भावः। आरुरित्यप्येवम्। थलि तु कादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति ऋदन्तत्वात् भारद्वाजमतेऽपि निषेधे प्राप्ते आह—**इडत्त्यर्ति**। पञ्चम्यर्थे षष्ठी। 'अचस्तास्वत्' इत्यतः थलीत्यनुवर्तते। 'विभाषा सृजिदृशोः' इति पूर्वसूत्राद्विभाषाग्रहणमस्वरितत्वान्नानुवर्तते। तदाह—**अद् ऋ इत्यादिना**। आर्धधातुकस्येडित्यनुवृत्तौ पुनरिड्ग्रहणं तु 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेत्यनुवृत्तिनिवृत्तये इत्याहुः। **आरिथेति**। आरथुः आरुः। आर आरिव आरिम। कादिनियमादिट्। **अरिष्यतीति**। 'ऋद्धनोः' इति इट्। ऋच्छतु। आर्च्छेत्। **अर्यादिति**। 'गुणोऽर्ति' इति गुणे रपरत्वमिति भावः। **आर्षीदिति**। सिचि वृद्धिः। 'सर्तिशास्त्यर्तिभ्यश्च' इति अङ् तु न, तत्र भौवादिकस्य ऋधातोर्न ग्रहणमित्यनुपदमेवोक्तेरिति भावः। आरिष्यत्। 'ऋद्धनोः स्ये' इति इट्।

**गृ घृ सेचने**। अनिटौ। **गरतीति**। **जगार**। असंयोगादित्वात् 'ऋतश्च' इति गुणो न। जग्रतुः जग्रुः। कादिनियमेन इटि प्राप्ते अचस्तास्वदिति नेट्। ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट्। तदाह-**जगर्थेति**। जग्रथुः जग्र। जगार-जगर। **जग्रिवेति**। कादिनियमादिट्। जग्रिम। गर्ता। गरिष्यति। 'ऋद्धनोः' इति इट्। गरतु। अगरत्। गरेत्। **रिङिति**। आशीर्लिङि असंयोगादित्वात् 'गुणोऽर्ति' इति गुणाभावे 'रिङ् शयग्लिङ्क्षु' इति रिङित्यर्थः। **ग्रियादिति**। रीङि प्रकृते रिङ्विधेर्न दीर्घः। **अगार्षीदिति**। सिचि वृद्धौ रपरत्वम्। अगार्ष्टाम्। अगरिष्यत्। 'ऋद्धनोः' इति इट्। घृधातोस्तु भौवादिकस्य घृतं घर्मः घृणा इत्यत्रैव प्रयोगः, नान्यत्रेति 'तृज्वत्क्रोष्टुः' इति सूत्रे भाष्ये स्पष्टम्। **ध्वृ हूर्च्छने इति**। हूर्च्छनं कुटिलीभवनम्। ध्वरति। दध्वार। 'ऋतश्च' इति गुणः। दध्वरतु. दध्वरुः। थलि 'अचस्तास्वत्' इति कादिनियमप्राप्त इट् न। ऋदन्तत्वाच्च भारद्वाजमतेऽपि नेट्। दध्वर्थ दध्वरथुः दध्वर। दध्वार-दध्वर दध्वरिव दध्वरिम। कादिनियमादिट्। ध्वर्ता। 'ऋद्धनोः' इति इट्—ध्वरिष्यति। ध्वरतु। अध्वरत्। ध्वरेत्। आशीर्लिङि 'गुणोऽर्ति' इति गुणः। ध्वर्यात्। अध्वार्षीत्। अध्वरिष्यत्। **स्रु गतौ**। अनिट्। स्रवति। सुस्राव। असुसादौ कित्त्वात् गुणाभावे उवङ्। सुस्रुवतुः सुस्रुवुः। कादित्वान्नेट्। तदाह—**सुस्रोथेति**। सुस्रुवथुः सुस्रुव। सुस्राव—सुस्रव। **सुस्रुवेति**। कादित्वान्नेट्। सुस्रुमेत्यपि ज्ञेयम्। स्रोता। स्रोष्यति। स्रवतु

**इभ्यः परस्मैपदेषु** । ७ । २ । ७२ ॥ एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां श्रियां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् । श्रु १४२ श्रवणे । (२३८६) **श्रुवः शृ च** । ३ । १ । ७४ ॥ श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । श्नोर्ङित्वाद्धातोर्गुणो न । शृणोति शृणुतः । (२३८७) **हुश्नुवोः सार्वधातुके** । ६ । ४ । ८७ ॥

---

अस्रवत् । स्रवेत् । **स्रूयादिति** । ' अकृत्सार्वधातुकयोः ' इति दीर्घ इति भावः । लुङि विशेषमाह—**णिश्रीति चङिति** । ' चङि ' इति द्वित्वमित्यपि द्रष्टव्यम् । ननु असुस्र् अ त् इति स्थिते रेफादुत्तरस्य उकारस्य 'सार्वधातुकार्धधातुकयो'रिति गुणस्य चङ्निमित्तकस्य ङित्त्वान्निषेधेऽपि उवङपेक्षया परत्वात् तिपं निमित्तीकृत्य रेफादुकारस्य लघूपधगुणः स्यादित्यत आह—**लघूपधगुणादन्तरङ्गत्वादुवङिति** । बहिर्भूततिबपेक्षत्वाल्लघूपधगुणः बहिरङ्गः । अन्तर्गतचङपेक्षत्वादुवङन्तरङ्गः । अतः उवङेव भवति । परादन्तरङ्गस्य बलवत्त्वादिति भावः । **असुस्रुवदिति** । अस्रोष्यत् ।

**षु प्रसवेति** । अत्र प्रसवशब्दस्य गर्भमोचनपरत्वभ्रमं वारयति—**प्रसवोऽभ्यनुज्ञानमिति** । ' ओं प्रणयेति ब्रह्मा प्रसौति ' इत्यादौ तथा दर्शनादिति भावः । षोपदेशोऽयम् । शपि उवङं बाधित्वा परत्वात्सार्वधातुकयोरिति गुणः । सवति । सुषाव । अतुसादौ कित्त्वाद्गुणाभावे उवङ् । सुषुवतुः सुषुवुः । भारद्वाजनियमात्थलि वेट् । तदाह—**सुषविथ सुषोथेति** । अकित्त्वाद्गुण इति भावः । सुषुवथुः सुषुव । सुषाव—सुषव । वमयोस्तु क्रादिनियमान्नित्यमिट् । तदाह—**सुषुविवेति** । कित्त्वाद्गुणाभावे उवङ् । **सोतेति** । सोष्यति । सवतु । असवत् । सवेत् । सूयात् । लुङि असौषीदिति प्राप्ते—**स्तुसुधूञ्भ्यः** । 'इडत्त्यर्ति' इत्यतः इडित्यनुवर्तते । ' अञ्जेः सिचि ' इत्यतः सिचीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—**एभ्यः सिच इति** । **असावीदिति** । सिचि वृद्धौ 'इट ईटि' इति सिज्लोपः । **पूर्वोत्तराभ्यामिति** । स्तुञ्धूञ्भ्यामित्यर्थः । **सुनोतेरिति** । षुञ् अभिषवे इति श्नुविकरणस्येत्यर्थः । **असौषीदिति** । इडभावे सिचि वृद्धिः इति भावः । असोष्यत् ।

**श्रु श्रवणे इति** । उदन्तोऽयमनिट् । **श्रुवः शृ च** । शृ इति लुप्तप्रथमाकम् । चकारेण ' स्वादिभ्यः श्नुः ' इति सूत्रस्थः श्नुः समुच्चीयते । तदाह—**श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्चेति** । **शपोऽपवाद इति** । अनेन

---

१ ' अचि श्नुधातुभ्रुवाम् ' इति उवङ्विधायकसूत्रे श्नु ग्रहणं तु आप्नुवन्ति, शक्नुवन्ति, इत्यादिसंयोगपूर्वकश्नोरुवङर्थम् ।

**जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण्स्यादजादौ सार्वधातुके । उवङोऽपवादः । शृण्वन्ति । शृणोमि शृण्वः—शृणुवः शृण्मः—शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् । ध्रु १४३ स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि । दु १४४ द्रु १४५**

---

शब्विषये कर्त्रर्थसार्वधातुक एवास्य प्रवृत्तिः सूचिता । **श्नोर्ङित्त्वादिति** । सार्वधातुकमपिदित्यनेनेति भावः । **शृणोतीति** । तिपमाश्रित्य श्नोर्गुणः । तसादीनां ङित्त्वात् श्नोर्न गुणः । तदाह—**शृणुत इति** । शृणु अन्तीति स्थिते अन्तेः ङित्त्वात् श्नोर्गुणनिषेधे सति उवङि प्राप्ते—**हुश्नुवोः** । श्नोः प्रत्ययत्वात्तदन्तग्रहणम् । 'इणो यण्' इत्यतः यण् इत्यनुवर्तते, 'अचि श्नु' इत्यतः अचीति । तस्य सार्वधातुकविशेषणत्वात्तदादिविधिः । 'एरनेकाचः' इति सूत्रं एरितिवर्जमनुवर्तते । 'ओः सुपि' इत्यतः ओरिति च षष्ठ्यन्तम् । तदाह—**जुहोतेरित्यादिना** । *असंयोगपूर्वस्येति तु उकारस्य विशेषणं नतु श्नुविशेषणम् । तेन आप्नुवन्तीत्यत्र यण् न । हुश्नुवोः किम् ? योयुवति* । अत्र युधातोर्यङ्लुकि 'अदभ्यस्ता'दिति झेरदादेशे योयु अति इति स्थिते अनेकाजङ्गावयवस्य असंयोगपूर्वस्य उकारस्य यण् न भवति । अत्र भाष्ये 'बहुलं छन्दसि' इत्यनुवृत्तौ 'यङोऽचि च' इति विहितस्य यङ्लुकः छान्दसत्वात् 'छन्दस्युभयथा' इत्यार्धधातुकत्वाश्रयणादेव योयुवतीत्यत्र यणभावसिद्धेः हुश्नुग्रहणं भाषायामपि क्वचित् यङ्लुकं ज्ञापयतीत्युक्तम् । तथाच भाषायामपि अनेकाचः असंयोगपूर्वकोकारान्ताद्योयुवतीत्यादौ यङ्लुक्सिद्धेः तत्र यणभावार्थं हुश्नुग्रहणमिति फलति । ज्ञापकस्य सामान्यापेक्षत्वादुदाहृतोवर्णान्तादन्यत्रापि क्वचिद्यङ्लुक् सिध्यति । एतदेवाभिप्रेत्य भाष्ये—हुश्नुग्रहणं ज्ञापयति—भाषायामपि यङ्लुक् भवति' इत्युक्त्वा, 'किमेतस्य ज्ञापने प्रयोजनं, बेभिदीति चेच्छिदीति इत्येतत्सिद्धं भवति' इत्युक्तम् । अत्र भिदिच्छिदोरेव ग्रहणादुदाहृतोकारान्तादन्यत्र भवन् यङ्लुक् आभ्यामेव भवति, न त्वन्यत्रेत्याहुः । भिदिच्छिदोर्ग्रहणं प्रदर्शनमात्रमित्यन्ये । **शृण्वन्तीति** । शृणुथः । शृणुथेत्यपि ज्ञेयम् । 'लोपश्चास्यान्तरस्यां म्वोः' इत्यभिप्रेत्याह—**शृण्व इत्यादि** । शुश्राव शुश्रुवतुः शुश्रुवुः । थलि वमयोश्च क्रादित्वान्नित्यमिण्निषेधः । तदाह—**शुश्रोथ** । **शुश्रुवेति** । शुश्रुमेत्यपि ज्ञेयम् । श्रोता । श्रोष्यति । शृणोतु—शृणुतात् शृणुताम् । शृण्वन्तु । 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुकं मत्वा आह—**शृणिवति** । शृणुतात् शृणुतम् शृणुत । **शृणवानीति** । आटः पित्त्वेन ङित्त्वाभावाद्गुण इति भावः ।

**ध्रु स्थैर्ये इति** । अनिट् । ध्रवति । दुध्राव दुध्रुवतुः दुध्रुवुः । भारद्वाजनियमात्थलि वेट् । दुध्रविथ—दुध्रोथ दुध्रुवथुः दुध्रुव । दुध्राव–दुध्रव दुध्रुविव दुध्रु-

गतौ । दुदोथ-दुदविथ । दुदुविव । दुद्रोथ । दुद्रुव । 'णिश्रि—( सू २३१२ ) इति चङ् अदुद्रुवत् । जि १४६ ज्रि १४७ अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनं च । आद्ये सकर्मकः । शत्रून् जयति । द्वितीये त्वकर्मकः । अध्ययनात्पराजयते । अध्येतुं ग्लायतीत्यर्थः । 'विपराभ्यां जेः' ( सू २६८५ ) इति तङ् । 'पराजेरसोढः' ( सू ५८६ ) इत्यपादानत्वम् ।

अथ डीङन्ता ङितः । ष्मिङ् १४८ ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे-सिष्मियिध्वे । गुङ् १४९ अव्यक्ते शब्दे । गवते । जुगुवे । गाङ्

---

विम । क्रादिनियमादिट् । ध्रोता । ध्रोष्यति । ध्रवतु । अध्रवत् । ध्रवेत् । ध्रूयात् । अध्रौषीत् । अध्रोष्यत् । **दु द्रु गताविति** । अनिटौ । दवति । द्रवति । दुदाव दुदुवतुः दुदुवुः । दुद्राव दुद्रुवतुः दुद्रुवुः । अस्य भारद्वाजनियमात्थलि वेडित्याह—**दुदोथ दुदविथेति** । दुदुवथुः दुदुव । दुदाव—दुदव । वमयोः क्रादिनियमादिडित्याह—**दुदुविवेति** । द्वितीयस्य क्रादित्वात्थलि नित्यं नेट् । तदाह—**दुद्रोथेति** । दुद्रुवथुः दुद्रुव । दुद्राव—दुद्रव । वमयोः क्रादित्वान्नेट् । तदाह—**दुद्रुवेति**। दोता। द्रोता । दोष्यति ।द्रोष्यति। दवतु।द्रवतु । अदवत् । अद्रवत्।दवेत्। द्रवेत्।दूयात्। द्रूयात् । अदौषीत् ।**चङिति**। द्रुधातोरिति भावः । **अदुद्रुवदिति** । चङीति द्वित्वम् । ङित्त्वाद्गुणनिषेधे उवङिति भावः । अदोष्यत् । अद्रोष्यत् । **जि ज्रि अभिभवे इति** । अनिट् । **न्यूनीकरणमिति** । नीचीकरणमित्यर्थः । **न्यूनीभवनमिति** । क्षीणबलीभवनमित्यर्थः । **शत्रून् जयतीति** । नीचीकरोतीत्यर्थः । ननु जिधातोः परस्मैपदित्वात् पराजयत इति कथमात्मनेपदमित्यत आह—**विपराभ्यामिति** । ननु पराजयस्य अध्ययनेन संश्लेषविश्लेषयोरभावात् कथं पराजयं प्रत्यध्ययनस्यापादानत्वमित्यत आह—**पराजेरिति** । जयति । लिटि 'सन्लिटोर्जेः' इति कुत्वम् । जिगाय जिग्यतुः जिग्युः । भारद्वाजनियमात्थलि वेट् । जिगयिथ—जिगेथ जिग्यथुः जिग्य। जिगाय—जिगय । वमयोः क्रादिनियमादिट् । जिग्यिव जिग्यिम । जेता । जेष्यति । जयतु । अजयत् । जयेत् । जीयात् । अजैषीत् । अजैष्टाम् अजैषुः । अजैषीः अजैष्टम् अजैष्ट । अजैषम् अजैष्व अजैष्म । अजेष्यत् । इति घेडादयोऽजन्ताः परस्मैपदिनः ।

**अथ डीङन्ता ङित इति** । 'डीङ् विहायसा गतौ' इत्येतत्पर्यन्ताः ङित्त्वादात्मनेपदिन इत्यर्थः । ष्मिङ् ईषद्धसने । षोपदेशोऽयम् । **स्मयते इति** । धात्वादेरिति षस्य सः । **सिष्मिये इति** । कित्त्वाद्गुणाभावे इयङ् । आदेशसकारत्वादुत्तरखण्डे सस्य षः । सिष्मियाते सिष्मियिरे । क्रादिनियमादिट् । सिष्मियिषे सिष्मियाथे । 'विभाषेटः' इति मत्वा आह—**सिष्मियिढ्वे सिष्मियिध्वे**

**९५० गतौ । गाते । गाते । गाते । इट एत्वे कृते वृद्धिः । गै । लङ इटि—अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । 'गाङ्कुटादिभ्यः—' (सू २४६१) इति सूत्रे इङादेशस्यैव गाङो ग्रहणं, न त्वस्य । तेनाङित्त्वात् ' घुमास्था- ' ( सू २४६२ ) इतीत्त्वं न । अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः । कुङ् ९५१ घुङ् ९५२ उङ् ९५३ ङुङ् ९५४ शब्दे । अन्ये तु उङ् कुङ्**

---

**इति** । ङेता । ङेष्यते । ङ्रयताम् । अङ्रयत । ङ्येत । ङेषीष्ट । अङेष्ट । अङेष्यत । गुङ्धातुरनिट् । गुणः ओकारः अवादेश इति विशेषः । गाङ्धातुरनिट् । **गाते इति** । लटस्तादेशे शपि सवर्णदीर्घे टेरेत्त्वमिति भावः । आतामि तथैव रूपमाह—**गाते इति** । गा अ आतामिति स्थिते परत्वात् सवर्णदीर्घे अतः परस्य दीर्घाकारस्याभावात् ' आतो ङितः ' इति इय् न भवति । झावपि तथैव रूपमाह—**गाते इति** । शपा सह आकारस्य सवर्णदीर्घे 'आत्मनेपदेष्वनतः' इति झेः अदादेशे टेरेत्वमिति भावः । गासे गाथे गाध्वे । लट उत्तमपुरुषैकवचने विशेषमाह—**इट इति** । गा अ इ इति स्थिते सवर्णदीर्घे सति इट एत्वे कृते 'वृद्धिरेचि' इति वृद्धौ गै इति रूपमित्यर्थः । गावहे गामहे । लिटि अजादौ आल्लोपः । जगे जगाते जगिरे । क्रादिनियमादिट् । जगिषे जगाथे जगिध्वे । जगे जगिवहे जगिमहे । गाता । गास्यते । गाताम् गाताम् गाताम् । गास्व गाथाम् गाध्वम् । गै गावहै गामहै । अगात अगाताम् अगात । अगाथाः अगाथाम् अगाध्वम् । **लङ इटीति** । अगा अ इ इति स्थिते टिदादेशत्वाभावे सवर्णदीर्घे आद्गुणे अगे इति रूपमित्यर्थः । अगावहि अगामहि ।

**गेतेति** । लिङस्तादेशे शपि गा अ त इति स्थिते सवर्णदीर्घे सीयुटि सलोपे यलोपे आद्गुण इति भावः । **गेयातामिति** । गा अ आतामिति स्थिते सवर्णदीर्घे सीयुटि सलोपे आद्गुण इति भावः । **गेरन्निति** । झस्य रन्भावे गा अ रन् इति स्थिते सवर्णदीर्घे सीयुटि सलोपे यलोपे आद्गुण इति भावः । गेथाः गेयाथाम् गेध्वम् । गेय गेवहि गेमहि । आशीर्लिङि आह—**गासीष्टेति** । गासीयास्ताम् गासीरन् । गासीष्ठाः गासीयास्थाम् गासीध्वम् । गासीय गासीवहि गासीमहि । ननु गासीष्टेत्यादौ ' गाङ्कुटादिभ्योऽञ्णिन्ङित् ' इति ञ्णिद्भिन्नप्रत्ययस्य ङित्त्वविधानेन सीयुडागमविशिष्टप्रत्ययस्य ङित्त्वात् ' घुमास्थागापाजहातिसां हलि ' इति हलादौ क्ङिति विहितमीत्त्वं स्यादित्यत आह—**गाङ्कुटादिभ्य इति सूत्रे इति** । इङ इत्यनुवृत्तौ ' गाङ्लिटि ' इति विहितस्य गाङादेशस्यैव गाङ्कुटादिसूत्रे ग्रहणं, न त्वस्य गाधातोरित्यर्थः । एतच्च ' गाङ् लिटि ' इति सूत्रे भाष्ये स्पष्टम् । **तेनेति** । गाङ्कुटादिसूत्रे प्रकृतस्य गाधातोरग्रहणेनेत्यर्थः । लुङ्याह—**अगास्तेति** । अगासाताम् अगासत । अगास्थाः अगासाथाम् अगाध्वम् । अगासि अगास्वहि अगास्महि । अगास्यत । **आदादिकोऽयमिति** । ततश्च ' अदि-

खुङ् गुङ् घुङ् ङुङ् इत्याहुः। कवते। चुकुवे। घवते। अवते। ऊवे। 'वार्णादाङ्गं बलीयः' (प ५६) इत्युवङ्। ततः सवर्णदीर्घः। ओता। ओष्यते। ओषीष्ट। औष्ट। ङवते। ञुङुवे। ङोता। च्युङ् ९५५ ज्युङ् ९५६ प्रुङ् ९५७ प्लुङ् ९५८ गतौ। क्लुङ् इत्येके। रुङ् ९५९ गतिरेषणयोः। रेषणं हिंसा। रुरुवे। रवितासे। धृङ् ९६० अवध्वंसने। धरते। दध्रे। मेङ् ९६१ प्रणिदाने। प्रणिदानं विनिमयः प्रत्यर्पणं च। प्रणिमयते। 'नेर्गद—' (सू २२८५)

---

प्रभृतिभ्यः शपः' इति शपो लुगिति भावः। **फले तु न भेद इति।** शपो लुकि सति, गाते इत्यादेव रूपम्। तस्मिन्नसत्यपि गा अ ते इत्यादौ सवर्णदीर्घे सति तदेव रूपमिति न रूपभेद इत्यर्थः।

**कुङ् घुङ् उङ् ङुङ् शब्दे इति।** चत्वारोऽपि ङितः आद्यद्वितीयचतुर्थाः कवर्गप्रथमचतुर्थपञ्चमाद्याः। तृतीयस्तु केवलोवर्णः। **अन्ये त्विति।** आद्यः केवलोवर्णो ङित्। इतरे तु पञ्च क्रमेण कवर्गाद्याः। तत्र कुङ्धातोरुदाहरति—**कवते इति।** लिटि अजादौ कित्त्वाद्गुणाभावे उवङ्। तदाह—**चुकुवे इति।** चुकुवाते चुकुविरे। क्रादिनियमादिट्। चुकुविषे चुकुवाथे चुकुविध्वे। चुकुवे चुकुविवहे चुकुविमहे। कोता। कोष्यते। कवताम्। अकवत। कवेत कोषीष्ट। अकोष्ट। अकोष्यत। एवं खवते इत्यादि। उङ्धातोराह—**अवते इति। ऊवे इति।** उ उ ए इति स्थिते द्वितीयस्य उवर्णस्य उवङि कृते सवर्णदीर्घ इति भावः। ननु उवङः बहिर्भूतप्रत्ययापेक्षतया बहिरङ्गत्वादन्तरङ्गे सवर्णदीर्घे कृते ऊ ए इति स्थिते उवङि उवे इत्येवोचितमित्यत आह—**वार्णादिति।** ऊवाते ऊविरे। क्रादिनियमादिट्। ऊविषे ऊवाथे ऊविध्वे। ऊवे ऊविवहे ऊविमहे। **ओता ओष्यते इति।** अवत। अवेत। ओषीष्ट। औष्ट। औष्यत। इत्यपि ज्ञेयम्। ङुङ्धातोर्लटि ङवते इति रूपमुक्तम्। संप्रति लिटि रूपमाह—**ञुङुवे इति।** 'कुहोश्चुः' इति ङकारस्य स्थानिनः चुर्भवन् स्थानसाम्यस्य पञ्चस्वभावादाभ्यन्तरप्रयत्नसाम्यस्य पञ्चस्वप्यविशिष्टत्वादल्पप्राणानुनासिक्यसाम्यात् ञकारः। प्रथमतृतीयौ तु न भवतः, आनुनासिक्याभावात्। च्युङादयोऽप्युवर्णान्ता अनिटः कुङ्धातुवत् ज्ञेयाः।

**रुङ् गतीति।** सेट्कोऽयम्। 'ऊद्दन्तैर्यौतिरुक्ष्णु' इत्यनिट्सु पर्युदासात्। तदाह—**रवितासे इति।** धृङ्धातुरनिट्। **दध्रे इति।** कित्त्वाद्गुणनिषेधे ऋकारस्य यण्। दध्राते दध्रिरे। क्रादिनियमादिट्। दध्रिषे दध्राथे दध्रिध्वे। दध्रे दध्रिवहे दध्रिमहे। धर्ता। लृटि स्ये 'ऋद्धनोः' इति इटि धरिष्यते। धरताम्। अधरत। धरेत। आशीर्लिङि सीयुटि 'उश्च' इति कित्त्वान्न गुणः। धृषीष्ट। 'ह्रस्वादङ्गात्' इति सिचो लुक्। अधृत अधृषाताम् अधृषत। अधरिष्यत। **मेङ् प्रणिदाने। णत्वमिति।** प्रणिदानशब्दे प्रणिमयते इत्यत्र च 'नेर्गद

**इति णत्वम्।** तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात्। **देङ्** ९९२ रक्षणे। दयते। (२३८८) **दयतेर्दिगि लिटि**। ७। ४। ९॥ **दिग्यादेशेन** द्वित्वबाधनमिष्यते इति वृत्तिः। दिग्ये। (२३८९) **स्थाघ्वोरिच्च**। १। २। १७॥ अनयोरिदादेशः स्यात् सिच्च कित्स्यात् तङि। अदित। अदिथाः। अदिषि। **श्यैङ्** ९९३ गतौ। श्यायते। शश्ये। **प्यैङ्** ९९४ वृद्धौ। प्यायते।

---

इति णत्वमित्यर्थः। ननु प्रणिमयत इत्यत्र णत्वमिदं न संभवति, शिद्विषये आत्वाभावेन, मारूपाभावात्। तथा प्रणिमानशब्देऽपि णत्वं न संभवति, तत्र मेङः कृतात्वस्य लाक्षणिकमारूपत्वात्। 'गामादाग्रहणेष्वविशेषः' इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु मीनातिमिनोत्योरात्त्वे प्रनिमाता प्रनिमास्यति इत्यत्रापि नेर्णत्वापत्तिरित्यत आह—**तत्रेति**। तत्र 'नेर्गद' इति णत्वविधौ। घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठित्वा तत्र प्रकृतिशब्दस्य घुमाङ्प्रकृतिपरत्वमाश्रित्य घौ माङ्धातौ घुमाङ्प्रकृतौ च परतः इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोःकृतात्वस्यापि ग्रहणस्य भाष्यकृता अभ्युपगतत्वादित्यर्थः। एवंच प्रणिमयते इत्यत्र नाव्याप्तिः, मेङः कृतात्वमाप्रकृतित्वे सति ङित्त्वात्। नापि मीनातिमिनोत्योरात्त्वे प्रनिमाता प्रनिमास्यतीत्यत्र अतिव्याप्तिः, मारूपस्य ङित्त्वाभावादिति भावः। एतच्च घुसंज्ञासूत्रे भाष्ये स्थितम्। ममे ममाते ममिरे। क्रादिनियमादिट्। ममिषे ममाथे ममिध्वे। ममे ममिवहे ममिमहे। माता। मास्यते। मयताम्। अमयत। मयेत। मासीष्ट। अमास्त। अमास्यत।

देङ्धातुर्मेङ्वत्। **दयतेर्दिगि**। दिगीति लुप्तप्रथमाकम्। देङ्धातोः दिगि इत्यादेशः स्याल्लिटीत्यर्थः। ननु लिट एशादौ दिग्यादेशे कृते द्वित्वे सति दिदिग्ये इत्यादि स्यादित्यत आह—**दिग्यादेशेनेति**। एतच्च भाष्ये स्पष्टम्। **वृत्तिरिति**। भाष्यस्याप्युपलक्षणम्। क्रादिनियमादिट्। दिग्यिषे दिग्याथे दिग्यिध्वे। दिग्ये दिग्यिवहे दिग्यिमहे। दाता। दास्यते। दयताम्। अदयत। दयेत। दासीष्ट। लुङि सिचि अदास् त इति स्थिते—**स्थाघ्वोरिच्च**। 'असंयोगाल्लिट्' इत्यतः किदिति 'हनस्सिच्' इत्यतः सिजिति चानुवर्तते। तदाह—**अनयोरित्यादिना।** परस्मैपदेषु नेदं प्रवर्तते, तत्र 'गातिस्था' इति सिचो लुका लुप्तत्वात्। अत एव 'लिङ्सिचौ' इति सूत्रादात्मनेपदेष्विति नानुवर्तितम्, व्यावर्त्याभावात्। **अदितेति**। इत्वे कृते 'ह्रस्वादङ्गात्' इति सिचो लुक्। त इत्यस्य ङित्त्वादिकारस्य

---

१ इदं च प्रकृतिग्रहणं घोरंशेऽपि संबन्ध्यते, तेन देङ् रक्षणे प्रणिदयते धेट् पाने प्रणिधयति इत्यादावपि नेर्णत्वसिद्धिः। न ह्यस्यां दशायामाकारान्तदाधारूपताऽस्तीति घुसंज्ञाया अप्राप्तेः घुप्रकृतित्वेनैव तस्मिन् परे नेर्णत्वसंभव इति घुसंज्ञासूत्रे भाष्ये स्पष्टम्॥ २ वस्तुतो 'धेटः अधासीत्' इत्यर्थं तदनुवर्त्यमेव।

पय्ये। प्याता। त्रैङ् १६५ पालने। त्रायते। तत्रे। पूङ् १६६ पवने। पवते। पुपुवे। पविता। मूङ् १६७ बन्धने। मवते। डीङ् १६८ विहायसा गतौ। डयते। डिड्ये। डयिता। तॄ १६९ प्लवनतरणयोः। (२३६०) **ॠत इद्धातोः। ७। १। १००॥** ॠदन्तस्य धातोरङ्गस्य इत्स्यात्। 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' (वा ४३७३)। तरति। 'ॠच्छत्यॄताम्'

---

न गुणः। आतामादौ तु इत्वे कृतेऽपि सिचो न लुक्, झलि परत एव लुग्विधेः। सिचः कित्वादिकारस्य न गुणः। अदिषाताम् अदिषत। अदिथाः अदिषाथाम्। अदिढ्वम्। **अदिषीति**। अदिष्वहि अदिष्महि। अदास्यत् इत्यपि ज्ञेयम्। **श्यैङ् गतौ। श्यायते इति।** शपि आयादेशः। शिद्विषयत्वादात्वं नेति भावः। **शश्ये इति।** एशि आत्वे आतो लोपः। शश्याते शश्यिरे। क्रादिनियमादिट्। शश्यिषे शश्याथे शश्यिध्वे। शश्ये शश्यिवहे शश्यिमहे। श्याता। श्यास्यते। श्यायताम्। अश्यायत। श्यायेत। श्यासीष्ट। अश्यास्त। अश्यास्यत। प्यैङ्धातुरपि श्यैङ्वत्। त्रैङप्येवम्।

**पूङ् पवने इति।** सेट् ऊदन्तानामनिट्सु पर्युदासात्। **पवते इति।** शपि गुणः अवादेशः। **पुपुवे इति।** कित्वाद्गुणाभावे उवङ्। पुपुवाते पुपुविरे। पुपुविषे पुपुवाथे पुपुविध्वे। पुपुवे पुपुविवहे पुपुविमहे। पविता। पविष्यते। पवताम्। अपवत। पवेत। पविषीष्ट। अपविष्ट। अपविष्यत। मूङ्धातुरप्येवम्। **डीङ् विहायसा गताविति।** आकाशेन गमने इत्यर्थः। सेडयम्, अनिट्सु डीङः पर्युदासात्। **डयते इति।** शपि ईकारस्य गुणे अयादेश इति भावः। **डिड्ये इति।** कित्वाद्गुणाभावे ईकारस्य यणिति भावः। डिड्याते डिड्यिरे। डिड्यिषे डिड्याथे डिड्यिध्वे। डिड्ये डिड्यिवहे डिड्यिमहे। डयिता। डयिष्यते। डयताम्। अडयत। डयेत। डयिषीष्ट डयिषीयास्ताम् डयिषीरन्। डयिषीष्ठाः डयिषीयास्थाम् डयिषीढ्वम्—डयिषीध्वम्। डयिषीय डयिषीवहि डयिषीमहि। अडयिष्ट। अडयिष्यत। इति स्मिङादयो डीङन्ता ङितः।

तॄधातुः सेट् परस्मैपदी। अनिट्सु ॠदन्तपर्युदासात्सेट्। **ॠत इद्धातोः।** ॠत इति धातोर्विशेषणम्। तदन्तविधिः। अङ्गस्येत्यधिकृतम्। तदाह—**ॠदन्तस्येति।** धातोः किम्। मातॄणाम्। तथाच तरति, विपर्ति, ततार पपार इत्यादौ ॠकारस्य शपि तिपि णलि च परे गुणवृद्धी बाधित्वा अन्तरङ्गत्वात् इत्वम् उत्वं च स्यादिति शङ्का प्राप्ता। तां परिहर्तुमाह—**इत्वोत्वाभ्यामिति।** ल्यब्लोपे पञ्चमीद्विवचनम्। 'ॠत इद्धातोः' इति इत्वं 'उदोष्ठ्यपूर्वस्य' इति उत्वमन्तरङ्गमपि बाधित्वा गुणवृद्धी विप्रतिषेधसूत्रेण परत्वात् स्यातामिति भावः। **तरतीति।** णलि

( सू २२८३ ) इति गुणः। 'तृफल—' ( सू ४३०१ ) इत्येत्वम्। तेरतुः तेरुः। (२३६१) **वॄतो वा**। ७। २। ३८॥ **वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि।** तरिता-तरीता। अलिटि इति किम्। तेरिथ। 'हलि च' ( सू ३५४ ) इति दीर्घः। तीर्यात्। (२३६२) **सिचि च परस्मैपदेषु**। ७। २। ४०॥ अत्र वृत इटो दीर्घो न। अतारिष्टाम्।

अथाष्टावनुदात्तेतः। गुप १७० गोपने। तिज १७१ निशाने। मान १७२ पूजायाम्। बध १७३ बन्धने। (२३६३) **गुप्तिज्किद्भ्यः सन्**। ३। १। ५॥ (२३६४) **मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य**। ३। १। ६॥ सूत्रद्वयोक्तेभ्यः सन्स्यात्, मानादीनामभ्यासस्येकारस्य दीर्घश्च। 'गुपेर्निन्दायाम्'

---

ततार। अतुसादौ कित्वाद्गुणनिषेधमाशङ्क्याह—**ऋच्छत्यृतामिति**। ततर् अतुस् इति स्थिते अकारस्य गुणशब्देन भावितत्वात् 'न शसददवादिगुणानाम्' इति निषेधमाशङ्क्याह—**तृफलेति। तेरतुः तेरुः इति**। तेरिथ तेरथुः तेर। ततार—ततर तेरिव तेरिम। **वॄतो वा**। वॄ ॠत् इत्यनयोः समाहारद्वन्द्वात्पञ्चम्येकवचनम्। वॄ इति वृङ्वृञोर्ग्रहणम्। 'आर्धधातुकस्येट्' इत्यत इडित्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'ग्रहोऽलिटि दीर्घः' इत्यतः अलिटि दीर्घ इत्यनुवर्तते। तदाह—**वृङ्वृञ्भ्यामित्यादि। तरिता तरीतेति**। इटो दीर्घविकल्पः। गुणे रपरत्वम्। तरिष्यति। तरतु। अतरत्। तरेत्। **हलि चेति**। आशीर्लिङि कित्वादॄकारस्य गुणनिषेधे, इत्वे, रपरत्वे 'हलि च' इति दीर्घे, तीर्यात् इति रूपमित्यर्थः। अतारीत् अतारिष्टाम्, इत्यादौ 'वॄतो वा' इति दीर्घे प्राप्ते—**सिचि च। अत्रेति**। परस्मैपदपरके सिचि वृङ्वृञ्भ्याम् ॠदन्ताच्च परस्य इटो दीर्घो नेत्यर्थः। 'न लिङि' इत्यतो नेत्यनुवर्तते। **अतारिष्टामिति**। अतारिषुः। अतारिषम् अतारिष्व अतारिष्म। अतरिष्यत्।

**गुप गोपने इति**। गोपनं रक्षणम्। **तिज निशाने इति**। निशानं तीक्ष्णीकरणम्। **मान पूजायाम्। बध बन्धने इति**। एते चत्वारोऽनुदात्तेत इति स्थितिः। **गुप्तिज्किद्भ्यः। मान्बध**। गुप्तिजी इह पठितौ। 'कित निवासे' इत्यनुपदमेव परस्मैपदिषु पठिष्यते। एभ्यस्त्रिभ्यो धातुभ्यः सन्प्रत्ययः स्यादिति प्रथमसूत्रार्थः। मानधातुर्बधधातुश्च इह पठितौ। दान खण्डने, शान तेजने इत्यनुपदमेव स्वरितेत्सु पठिष्येते। एभ्यश्चतुर्भ्यः सन् स्यादिति द्वितीयसूत्रे प्रथमखण्डस्यार्थः। आभ्यासस्येति च्छेदः। अभ्यासस्य विकारः आभ्यासः। स च 'सन्यतः' इति इत्वमेव, नतु ह्रस्व, इति 'गुणो यङ्लुकोः' इति सूत्रे भाष्ये स्पष्टम्। ततश्च मान्बधदान्शानामभ्यासावयवस्य इकारस्य सन्-संनियोगशिष्टो दीर्घश्च स्यादिति द्वितीयसूत्रे द्वितीयखण्डस्यार्थः, इत्यभिप्रेत्य सूत्रद्वयस्य फलितमर्थमाह—**सूत्रद्वयेति** अथ उक्तसनोः वृत्तिकृदाद्युपनिबद्धान् अर्थविशेषानाह—**गुपेर्निन्दायामित्यादिना**

( वा १६८७ ) । 'तिजेः क्षमायाम्' ( वा १६८८ ) । 'कितेर्व्याधिप्रतीकारे' ( वा १६८९ ) । निग्रहे अपनयने नाशने संशये च । 'मानेर्जिज्ञासायाम्' ( वा १६९२ ) । 'बधेश्चित्तविकारे' (वा १६९३) । 'दानेरार्जवे' (वा १६९४) 'शानेर्निशाने' ( वा १६९५ ) । 'सनाद्यन्ताः—' ( सू २३०४ ) इति धातुत्वम् । (२३९५) **सन्यङोः** । ६ । १ । ९ ॥ सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । अभ्यासकार्यम् । गुपिप्रभृतयः किञ्चिन्निन्द्याद्यर्थका एवानुदात्तेतः । दानशानौ तु स्वरितेतौ । एते नित्यं सन्नन्ताः । अर्थान्तरेषु त्वननुबन्धकाः चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्ता-

---

**शानेर्निशाने इत्यन्तेन** । अत्र गोपनाद्यर्थकानां निन्दादौ वृत्तिस्त्वर्थनिर्देशस्योपलक्षणत्वाद्बोध्या । जिज्ञासाशब्देन जिज्ञासाप्रयोज्यो विचारो लक्ष्यते । मानेर्विचारे इत्येव वृत्तिकृत् ।

सन्नन्तस्य धातुकार्यप्राप्त्यर्थमाह—**सनाद्यन्ता इति । सन्यङोः** । अवयवषष्ठ्येषा । प्रत्ययत्वात्तदन्तग्रहणम् । 'एकाचो द्वे प्रथमस्य' इति 'अजादेर्द्वितीयस्य' इति चाधिकृतम् । तदाह—**सन्नन्तस्येत्यादिना** । सनि यङि च परे इति तु न व्याख्येयम्, तथा सति प्रतिपूर्वादिणः सनि अटधातोर्यङि च प्रतीषिषति, अटाट्यते इत्यत्र प्रत्ययसहितस्य द्वित्वानापत्तेः । **अभ्यासकार्यमिति** । हलादिशेषादिकमित्यर्थः । **गुपिप्रभृतय इति** । कितधातुभिन्नाः गुप्तिजमानबधाश्चत्वारः गुपेर्निन्दायामित्यादिनिबद्धनिन्दाद्यर्थका एव अनुदात्तेतः सन्भाज इत्यर्थः । कितधातुस्तु परस्मैपदिषु पठिष्यमाणत्वादुदात्तेदेव सन् व्याधिप्रतीकारादिषु पञ्चस्वेवार्थेषु सन्भागिति भावः । **दानशानौ त्विति** । दान खण्डने शान तेजने इति धातू स्वरितेतावेव सन्तौ आर्जवे निशाने चार्थे सन्भाजावित्यर्थः, तयोरनुपदमेव स्वरितेत्सु पाठादिति भावः । **एते नित्यं सन्नन्ता इति** । एते गुप्तिजादयः सप्त धातवः गुपेर्निन्दायामित्यादिनिबद्धेष्वर्थेषु नित्यं सन्नन्ताः । निन्दाद्यर्थकत्वे सनं विना एषां प्रयोगो नास्तीत्यर्थः । **अर्थान्तरेषु त्विति** । निन्दादिभ्योऽन्येषु धातुपाठनिर्दिष्टेषु तदन्येषु चार्थेषु अनुदात्तानुबन्धरहिताः सन्तश्चौरादिका एव भवन्ति, न तु भौवादिका इत्यर्थः । चुरादिष्वेतेषामनुदात्तानुबन्धकत्वे अनुबन्धकरणस्य केवलेष्वचरितार्थतया ण्यन्तादकर्तृगेऽपि फले तङ् स्यादिति भावः ।

नन्वेवं सति भ्वादिगणे गुपादेरनुदात्तानुबन्धकरणं व्यर्थम्, उक्तरीत्या गोपनाद्यर्थकानामेषामनुबन्धरहितचौरादिकत्वनियमेन निन्दाद्यर्थेषु सन्नन्तनियमेन च ततोऽन्यत्र प्रयोगाभावादित्यत आह—**अनुबन्धस्येति** । गुपादिषु केवलेष्वनुबन्धनिर्देशस्य निष्फलतया अनुबन्धनिर्देशस्य सन्नन्तार्थत्वं विज्ञायत इति कृत्वा सन्नन्तात्तङित्यर्थः । नचैवमपि भ्वादिगणे एषां गोपनाद्यर्थनिर्देशो व्यर्थ एवेति वाच्यम्, भ्वादौ तदर्थनिर्देशस्य अपाणिनीयत्वादिति भावः । तदुक्तं भाष्ये—' गुपादिष्वनु-

**सङ्**। धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। जुगुप्सांचक्रे। तितिक्षते। मीमांसते। भष्भावः। चर्त्वम्। बीभत्सते। रभ १७४ राभस्ये। आरभते। आरेभे। रब्धा। रप्स्यते। डु लभष् १७५ प्राप्तौ। लभते। ष्वञ्ज १७६ परिष्वङ्गे। (२३१६) **दंशसञ्जस्वञ्जां शपि**। ६।४।२५॥ (२३१७) **रञ्जेश्च**। ६। ४। २६॥ एषां शपि नलोपः। स्वजते। परि-

बन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपदम्' इति। अत्र सन्नन्तादात्मनेपदमित्युक्त्या केवलानामेषां शब्विकरणानां नास्ति प्रयोग इति सूचितम्। तथा चुरादिष्वेषामनुदात्तानुबन्धराहित्यमित्यपि सूचितम्। अन्यथा अनुबन्धकरणस्य केवलेष्वचरितार्थत्वात् सन्नन्तादिव णयन्तादपि अकर्तृगे फले आत्मनेपदार्थत्वापातात्सन्नन्तादात्मनेपदमित्युक्तिरसंगता स्यादित्यन्यत्र विस्तरः। **धातोरितीति**। 'आर्धधातुकं शेषः' इत्यत्र धातोर्विहितः प्रत्यय इतिविहितविशेषणाश्रयणात् सनश्चास्य धात्वधिकारविहितत्वाभावान्नार्धधातुकत्वमित्यर्थः। **तेनेति**। सन आर्धधातुकत्वाभावेनेत्यर्थः। **जुगुप्सते इति**। निन्दतीत्यर्थः। गुपेः सनि अनार्धधातुकत्वादिड्गुणयोरभावे 'सन्यङोः' इति द्वित्वे हलादिशेषे अभ्यासचुत्वमिति भावः। **जुगुप्सांचक्रे इति**। कास्प्रत्ययादित्याम्। जुगुप्सिता। जुगुप्सिष्यते। जुगुप्सताम्। अजुगुप्सत। जुगुप्सेत। जुगुप्सिषीष्ट। अजुगुप्सिष्ट। अजुगुप्सिष्यत।

**तितिक्षते इति**। तीक्ष्णीकरोतीत्यर्थः[1]। तिजेः सनि द्वित्वादि। जस्य कुत्वेन गः, तस्य चर्त्वेन कः, सस्य षत्वमिति विशेषः। **मीमांसते इति**। विचारयतीत्यर्थः। मान्धातोः सनि द्वित्वे हलादिशेषे अभ्यासह्रस्वे 'सन्यतः' इति इत्त्वे मान्बधेत्यभ्यासदीर्घे, नश्चेत्यनुस्वारे, मीमांसधातोर्लडादीति भावः। बधधातोः सनि विशेषमाह—**भाष्भाव इति**। बकारस्य भकार इत्यर्थः। **चर्त्वमिति**। धस्य तकार इत्यर्थः। तथाच भत्सेति सन्नन्तं संपन्नम्। **बीभत्सते इति**। भष्त्वचर्त्वयोरसिद्धत्वात् बध् इत्यस्य द्वित्वे हलादिशेषे 'सन्यतः' इति इत्त्वे 'मान्बध' इति दीर्घे बीभत्सधातोर्लडादीति भावः। तदेवं गुपादिषु सप्तसु सन्नन्तेषु अत्र क्रमे धातुपाठे निबद्धाश्चत्वार उदाहृताः। कितमानशानधातवस्तु अनुपदमेव धातुपाठक्रमे पठिष्यमाणास्तत्र तत्रोदाहरिष्यन्ते। **रभ राभस्ये इति**। अनिडयम्। राभस्यं शीघ्रीभावः। आङ्पूर्वकस्तु प्रारम्भार्थकः। तदाह—**आरभते इति**। **रब्धेति**। झषस्तथोरिति धत्वम्, भस्य जश्त्वम्। **रप्स्यत इति**। रभताम्। अरभत। रभेत। रप्सीष्ट। अरब्ध। अरप्स्यत। **डु लभषिति**। डुरित् षकारश्च। 'ड्वितः क्त्रिः' 'षिद्भिदादिभ्योऽङ्' इति प्रयोजनम्। अनिट् रभधातुवद्रूपाणि।

**ष्वञ्ज परिष्वङ्गे इति**। षोपदेशोऽयमनिट्। **दंशसञ्ज**। **रञ्जेश्च**। व्या-

1 'तिजेः क्षमाया'मित्युक्तेः क्षमते इत्यर्थ उचितः।

स्वजते । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति व्याकरणान्तरम् । देभतुः सस्वजे इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । 'सदेः परस्य लिटि' ( सू २३६१ ) इति सूत्रे स्वञ्जेरुपसंख्यानम्' ( वा ४९६८ ) अतोऽभ्यासात्परस्य षत्वं न । परिषस्वजे—परिषस्वञ्जे । सस्वजिषे—सस्वञ्जिषे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । अस्वङ्क्त । प्रत्यष्वङ्क्त । 'प्राक्सितात्—' ( सू २२७६ ) इति षत्वम् । परिनिविभ्यस्तु 'सिवादीनां वा—' ( सू २३५६ ) इति विकल्पः । एतदर्थमेव 'उपसर्गात्सुनोति—' ( सू २२७० ) इत्येव सिद्धे स्तुस्वञ्ज्योः 'परिनिवि—' ( सू २२७५ ) इत्यत्र

---

ख्यासौकर्याय सूत्रद्वयमुपात्तम् । **नलोप इति** । नकारस्य लोप इत्यर्थः, 'श्रानिलोपः' इत्यतः तदनुवृत्तेरिति भावः । **परिष्वजते इति** । 'परिनिविभ्यः' इति षत्वमिति भावः । संयोगात्परत्वाल्लिटः कित्त्वे अप्राप्ते आह—**श्रन्थीति** । व्याकरणान्तरमिदं पाणिनीयैरपि ग्राह्यमित्याह—**देभतुरिति** । 'अत एकहल्मध्ये' इति सूत्रभाष्ये देभतुः इत्युदाहृतम् । 'सदेः परस्य लिटि' इति सूत्रभाष्ये सस्वजे इत्युदाहृतम् । ततश्च एकदेशानुमतया श्रन्थिग्रन्थीत्यादिवाक्यं कृत्स्नं व्याकरणान्तरस्थं भाष्यानुमतमिति विज्ञायत इत्यर्थः । **सदेरिति** । 'सदेः परस्य लिटि' इति षत्वनिषेधसूत्रे स्वञ्जे रपि ग्रहणमित्यर्थः । ततश्च स्वदिस्वञ्ज्योरुत्तरखण्डस्य सस्य षत्वं न स्यादिति लब्धम् । तदाह—**अतोऽभ्यासात् परस्येति । परिषस्वजे परिषस्वञ्जे इति** । परस्येत्युक्तेरुत्तरखण्डस्यैव षत्वनिषेधः, न त्वभ्यासस्य । कित्त्वपक्षे नलोपः । सस्वजाते—सस्वजाते । सस्वञ्जिरे—सस्वजिरे । क्रादिनियमादिडित्याह—**सस्वजिष सस्वञ्जिषे इति** । सस्वजाथे-सस्वजाथे । सस्वञ्जिध्वे-सस्वजिध्वे । सस्वञ्जे-सस्वजे । सस्वजिवहे-सस्वजिवहे । सस्वञ्जिमहे-सस्वजिमहे । **स्वङ्क्तेति** । स्वञ्ज् ता इति स्थिते जकारस्य कुत्वेन गकारे सति श्चुत्वसंपन्नञकारस्य निवृत्तौ नकारस्यानुस्वारे तस्य परसवर्णेन ङकारे गकारस्य चर्त्वे रूपम् । एवमग्रेऽपि । **स्वजेतेति** । 'दंशसञ्ज' इति शपि नलोप इति भावः । **स्वङ्क्षीष्ट । अस्वङ्क्तेति** । लुङि अस्वञ्ज् स् त इति स्थिते 'झलो झलि' इति सिज्लोपे कुत्वादि पूर्ववदिति भावः । ननु प्रत्यष्वङ्क्त इत्यत्र अटा व्यवधानादुपसर्गस्थादिणः परत्वाभावात् कथम् 'उपसर्गात्सुनोति' इति षत्वमित्यत आह—**प्राक् सितादिति । परिनिविभ्यस्त्विति** । परस्य स्वञ्जेः इति शेषः । ननु परिनिविभ्यः परस्यापि स्वञ्जेः 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति नित्यमेव षत्वमुचितम्, 'प्राक्सितादड्व्यवायेऽपि' इत्यटा व्यवधानेऽपि तस्य प्रवृत्तेः । 'उपसर्गात्सुनोति' इत्यादिसूत्रे स्वञ्जेः पठितत्वेन स्वञ्जेः 'प्राक्सितात्' इति सूत्रविषयत्वादित्यत आह—**एतदर्थमेवेत्यादि । परिनिवि इति** । नित्यषत्वविधौ स्वञ्जिरप्युपात्तः । ततः 'उपसर्गा-

पुनरुपादानम्। पर्यष्वङ्क्त-पर्यस्वङ्क्त। हद १७७ पुरीषोत्सर्गे। हदते। जहदे। हत्ता। हत्स्यते। हदेत। हत्सीष्ट। अहत्त।

अथ परस्मैपदिनः। ञि ष्विदा १७८ अव्यक्ते शब्दे। स्कन्दिर् १७९ गतिशोषणयोः। चस्कन्दिथ-चस्कन्थ। स्कन्ता। स्कन्त्स्यति। नलोपः—स्कद्यात्। इरित्वादङ्वा-अस्कदत्-अस्कान्त्सीत्। अस्कान्ताम्। अस्कान्त्सुः। **(२३९८) वेः स्कन्देरनिष्ठायाम्। ८। ३। ७३॥** षत्वं वा स्यात्। कृत्येदम्, अनिष्ठायाम् इति पर्युदासात्। विष्कन्त्ता-विस्कन्त्ता। निष्ठायां तु

---

त्सुनोति' इत्येव तस्य षत्वे सिद्धे पुनरुपादानं 'सिवादीनां वाड्व्यवायेऽपि' इत्युत्तरसूत्रे षत्वविकल्पविधौ अनुवृत्त्यर्थमेव संपद्यते। परिनिविभ्यः परस्य स्वञ्जेः 'सिवादीनां वा' इति षत्वविकल्पार्थं पूर्वसूत्रे 'परिनिविभ्यः सेव' इत्यत्र स्वञ्जिग्रहणमिति पर्यवस्यतीत्यर्थः। **हद पुरीषोत्सर्गे**। अनिडयम्। क्रादिनियमादिट्। जहदिषे। जहदिध्वे। जहदिवहे जहदिमहे। **हत्तेति**। लुटि तासि दस्य चर्त्वम्। **अहत्तेति**। 'झलो झलि' इति सिज्लोपः। गुपादयोऽष्टावनुदात्तेतो गताः।

**अथ परस्मैपदिन इति**। 'क्षि निवासे' इत्यन्ता इति शेषः। **ञि ष्विदेति**। ञिः आकारश्च इत्। सेट्। स्वेदति। सिष्वेद सिष्विदतुः सिष्विदुः। सिष्वेदिथ सिष्विदथुः सिष्विद। सिष्वेद सिष्विदिव सिष्विदिम। स्वेदिता। स्वेदिष्यति। स्वेदतु। अस्वेदत्। स्वेदेत्। स्विद्यात्। अस्वेदीत्। अस्वेदिष्यत्। स्कन्दिरिरित्। अनिट्। भारद्वाजनियमात्थलि वेडित्याह—**चस्कन्दिथ चस्कन्थेति**। अनिट्पक्षे चस्कन्द् थ इति स्थिते 'खरि च' इति दकारस्य तकारः। चस्कन्दिव चस्कन्दिम। **स्कन्तेति**। लुटि तासि चर्त्वेन दस्य तः। **स्कन्त्स्यतीति**। स्ये दस्य चर्त्वम्। स्कन्दतु। अस्कन्दत्। स्कन्देत्। आशीर्लिङि विशेषमाह—**नलोप इति**। इरः समुदायस्य इत्त्वेन धातोरनिदित्त्वादाशीर्लिङि नकारस्य लोप इत्यर्थः। **अस्कददिति**। लुङि अङि सति ङित्त्वान्नलोप इति भावः। अङभावे आह—**अस्कान्त्सीदिति**। अनेकहल्व्यवधानेऽपि हलन्तलक्षणा वृद्धिः प्रवर्तत इति निरूपितमज्झलौ। अतोऽत्र वृद्धौ दस्य चर्त्वेन तः। **अस्कान्तामिति**। हलन्तलक्षणवृद्धौ 'झलो झलि' इति सिज्लोपे दस्य चर्त्वम्। **अस्कान्त्सुरिति**। उसि सिचि वृद्धौ दस्य चर्त्वम्। अस्कान्त्सीः अस्कान्तम् अस्कान्त। अस्कान्त्सम् अस्कान्त्स्व अस्कान्त्स्म। अस्कन्त्स्यत्।

**वेः स्कन्देः**। शेषपूरणेन सूत्रं व्याचष्टे—**षत्वं वा स्यादिति**। 'अपदान्तस्य मूर्धन्यः' इत्यधिकारात् 'सिवादीनां वा' इत्यतो वेत्यनुवृत्तेश्चेति भावः। वेः परस्य स्कन्देः सस्य षो वा स्यात् अनिष्ठायां परत इति फलितम्। ननु विस्कन्द-

**विस्कन्नः। (२३६६) परेश्च। ८। ३। ७४॥ अभ्यासात्परस्य स्कन्देः सस्य षो वा। योगविभागात् अनिष्ठायाम् इति न संबध्यते। परिष्कन्दति–परिस्कन्दति। परिस्कन्नः–परिष्कण्णः। षत्वपक्षे णत्वम्। नच पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम्। 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यभ्युपगमात्। 'पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन' इति भाष्यम्। 'पूर्वं साधनेन' इति मतान्तरे तु न णत्वम्। यभ १८० मैथुने। येभिथ–ययब्ध। यब्धा।**

---

तीत्यादौ कुतो न षत्वविकल्प इत्यत आह—**कृत्येवेदमिति**। पर्युदासस्य अब्राह्मणमानयेत्यादाविव सजातीयापेक्षत्वादिति भावः। **विष्कन्त्ता विस्कन्त्तेति**। तृचि रूपे। अषोपदेशत्वादप्राप्ते विभाषेयम्। **परेश्च**। ननु 'विपरिभ्यां स्कन्देरनिष्ठाया'मित्येव सिद्धे सूत्रभेदो व्यर्थ इत्यत आह—**योगेति**। **षत्वपक्षे इति**। परिष्कन्द्त इति स्थिते अनिदितामिति नलोपे 'रदाभ्याम्' इति निष्ठातकारस्य तत्पूर्वदकारस्य च नत्वे सस्यानेन षत्वपक्षे प्रथमनकारस्य रेफापेक्षया भिन्नपदस्थत्वेऽपि षात् परत्वात् णत्वे द्वितीयनकारस्य ष्टुत्वेन णत्वे परिष्कण्ण इति रूपमित्यर्थः। ननु दकारस्थानिकनकारस्य षकारनिमित्तकं णत्वमन्तरङ्गम्, निमित्तनिमित्तिनोरेकपदस्थत्वात्। षत्वं तु परि इत्युपसर्गात्मकपदान्तरस्थमिणं निमित्तीकृत्य प्रवर्तमानं बहिरङ्गम्। ततश्च णत्वे कर्तव्ये बहिरङ्गस्य षत्वस्यासिद्धत्वात् षात्परत्वाभावात् कथं णत्वमित्याशङ्क्य निराकरोति—**न चेति**। पदद्वयाश्रयतया बहिरङ्गस्य षत्वस्यासिद्धत्वं यत्प्रसक्तं तन्न शङ्क्यमित्यन्वयः। कुत इत्यत आह—**धातूपसर्गयोरिति**। **पूर्वं धातुरिति**। धातुरुपसर्गेण सह युज्यते सन्ध्यादिकार्यं लभते। पश्चात् धातूपसर्गकार्यप्रवृत्त्यनन्तरं साधनेन युज्यते। साधनशब्दः कारकवाची। इह तु तद्वाचकः प्रत्ययो लक्ष्यते। प्रत्ययेनेति यावत्। इदं च 'संप्रसारणाच्च' इत्यादिसूत्रभाष्ये स्पष्टम्। तदाह—**भाष्यमिति**। **मतान्तरे त्विति**। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षे तु षत्वस्य बहिरङ्गतया असिद्धत्वान्न णत्वमित्यर्थः।

यभधातुरनिट्। यभति। ययाभ येभतुः। थलि तु भारद्वाजनियमादिट्पक्षे पित्त्वेनाकित्त्वेऽपि 'थलि च सेटि' इत्येत्त्वाभ्यासलोपं मत्वा आह—**येभिथेति**। **ययब्धेति**। थलि इडभावपक्षे पित्त्वेनाकित्त्वादेत्त्वाभ्यासलोपाभावे ययभ् थ इति

---

१ वस्तुतस्तु पूर्वं धातुरुपसर्गार्थेन युज्यते, तेन अनुभूयते इत्यादौ कर्मणि-लकारसिद्धिः। ततः साधनेन कर्तृकर्माद्यर्थकप्रत्ययेन, तत उपसर्गसंज्ञकशब्देन, इति नियतः क्रमः। अतएव अध्ययनमित्यादौ पूर्वं ल्युट् प्रत्यये तन्निमित्तके गुणे च कृतेऽधिना सह यण् भवति। अन्यथोपसर्गसंज्ञकशब्दस्य पूर्वं योगे अधयनमित्यापद्येत। 'संपरिभ्यां करोतौ भूषणे' इत्यादिः सुडपि उपसर्गार्थाश्रित इति साधन--कार्यात्पूर्वमेव तत्रोपसर्गसंज्ञकशब्दयोगोऽपीति शेखरे स्पष्टम्।

यप्स्यति। अयाप्सीत्। णम ९८१ प्रह्वत्वे शब्दे च। नेमिथ—ननन्थ। नन्ता। अनंसीत् अनंसिष्टाम्। गम्लृ ९८२ सृप्लृ ९८३ गतौ। (२४००) **इषुगमियमां छः**। ७। ३। ७७॥ एषां छः स्याच्छिति परे। गच्छति। जगाम जग्मतुः जग्मुः। जगमिथ–जगन्थ। गन्ता। (२४०१) **गमेरिट् परस्मैपदेषु**। ७। २। ५८॥ गमेः परस्य सकारादेरिट् स्यात्। गमिष्यति। लृदित्वादङ्। 'अनङि' इति पर्युदासान्नोपधालोपः। अगमत्। सर्पति। ससर्प। (२४०२) **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्**। ६। १। ५९॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे। स्रप्ता—सर्प्ता।

---

स्थिते 'झषस्तथोः' इति थस्य धत्वे भस्य जश्त्वेन बकार इति भावः। येभथुः येभ। ययाभ–ययभ। क्रादिनियमादिट्। येभिव। येभिम। **यब्धेति**। लुटि तासि तकारस्य 'झषस्तथोः' इति धत्वम्। भकारस्य जश्त्वेन बकार इति भावः। **यप्स्यतीति**। स्ये भस्य चर्त्वेन पः। यभतु। अयभत्। यभेत्। यभ्यात्। **अयाप्सीदिति**। हलन्तलक्षणा वृद्धिरिति भावः। अयप्स्यत्। **णम प्रह्वत्वे इति**। अनिडयं णोपदेशश्च। केचित्त्विमं धातुमुदितं पठन्ति। तत्तु प्रामादिकम्। तथा सति 'उदितो वा' इति क्त्वायामिड्विकल्पस्य ('यस्य विभाषा' इति निष्ठायामिड्विकल्पस्य)[1] नापत्तेः। नमति। ननाम नेमतुः नेमुः। थलि तु भारद्वाजनियमादिट्पक्षे पित्त्वेनाकित्त्वेऽपि 'थलि च सेटि' इत्येत्त्वाभ्यासलोपं मत्वा आह—**नेमिथ ननन्थेति**। इडभावपक्षे पित्त्वेन अकित्त्वादेत्त्वाभ्यासलोपाभावे रूपम्। नेमथुः नेम। ननाम–ननम नेमिव नेमिम। क्रादिनियमादिट्। **नन्तेति**। मस्यानुस्वारपरसवर्णौ। नंस्यति। नमतु। अनमत्। नमेत्। नम्यात्। **अनंसीदिति**। 'यमरम' इति सगिति भावः। अनंस्यत्।

**गम्लृ सृप्लृ गताविति**। अनिटौ। सृपिरषोपदेशः। **इषुगमि। शितीति**। 'ष्ठिवुक्लमुचमाम्' इत्यतः तदनुवृत्तेरिति भावः। उदिन्निर्देशात्तौदादिकस्य इषेर्ग्रहणम्। अत्राचीत्यनुवर्त्य अजादौ शितीत्याश्रित्य इष्यति इष्णाति इत्यत्र छत्वं नेति भाष्ये स्थितम्। एवं चात्र सूत्रे तुदादौ च उदित्पाठः अनार्ष इति शब्देन्दुशेखरे स्थितम्। **गच्छतीति**। शपि मकारस्य छकारः। **जग्मतुरिति**। 'गमहन' इत्युपधालोपः। एवं जग्मुः। भारद्वाजनियमात्थलि वेट्। तदाह—**जगमिथ जगन्थेति**। जग्मथुः जग्म। जगाम–जगम जग्मिव जग्मिम। क्रादिनियमादिट्। **गमेरिट्**। गमेरिति पञ्चमी। 'सेऽसिचि' इत्यतः से इत्यनुवृत्तेन आर्धधातुकस्येत्यनुवृत्तं विशेष्यते। तदादिविधिः। तदाह—**गमेः परस्येत्यादिना**। परस्मैपदेष्वित्यस्य आत्मनेपदाभावे इत्यर्थः। एवं च संजिगमिषितेति तृचि इट् सिध्यति। **गमिष्यतीति**। गच्छतु। अगच्छत्। गच्छेत्। गम्यात्। लुङि विशेषमाह—**लृदित्वादङिति**। 'गमहन' इति उपधालोपो नेत्याह—**अनङि इति पर्यु-**

---

1 कोष्ठकान्तर्गतः पाठोऽसंबद्धः। नेष्यते च।

सृप्स्यति-सर्प्स्यति । असृपत् । यम ६८४ उपरमे । यच्छति । येमिथ-ययन्थ । यन्ता । अयंसीत् अयंसिष्टाम् । तप ६८५ सन्तापे । तप्ता । अताप्सीत् ।
(२४०३) **निसस्तपतावनासेवने । ८ । ३ । १०२ ॥** षः स्यात् । आसेवनं पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति । त्यज ६८६ हानौ । तत्यजिथ-तत्यक्थ ।

---

दासादिति । **अगमदिति** । लृङि अगमिष्यत् ।

**सर्पतीति** । शपि ऋकारस्य लघूपधगुणः रपरत्वम् । **ससर्पेति** । ससृपतुः ससृपुः । थलि क्रादिनियमान्नित्यमिट् । अजन्तत्वाभावादकारवत्त्वाभावाच्च नेड्विकल्पः । ससर्पिथ ससृपथुः ससृप । ससर्प ससृपिव ससृपिम । लुटि तासि लघूपधगुणे रपरे प्राप्ते—**अनुदात्तस्य च** । " 'सृजिदृशोः' इत्यतः झल्यमकितीति 'आदेच' इत्यत उपदेशे इति चानुवर्तते । तदाह—**उपदेशेऽनुदात्त इत्यादिना** । मित्त्वादन्त्यादचः परः । उपदेशे किम् । स्रप्तुम् । तुमुनि परे 'ञ्नित्यादिर्नित्यम्' इत्युदात्तोऽयम् । अथापि उपदेशे अनुदात्तत्वादम् भवत्येव । अकितीति किम् । क्तप्रत्यये सृप्तः । **स्रप्तेति** । सृप्धातोर्लुटि तासि अमागमे ऋकारस्य यणिति भावः । **सर्प्तेति** । अमभावे लघूपधगुणे रपरत्वमिति भावः । एवं स्रप्स्यति सर्प्स्यतीति । सर्पतु । असर्पत् । सर्पेत् । सृप्यात् । **असृपदिति** । लृदित्त्वात् च्लेरङि सति ङित्त्वान्न गुण इति भावः । अस्रप्स्यत्-असर्प्स्यत् । **यम उपरमे इति** । उपरमो विरमणम् । अनिडयम् । **यच्छतीति** । 'इषुगमियमाम्' इति शपि छः । ययाम येमतुः येमुः । थलि भारद्वाजनियमादिट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ । तदाह—**येमिथ । ययन्थेति** । इडभावे रूपम् । येमथुः येम । ययाम-ययम येमिव येमिम । क्रादिनियमादिट् । **यन्तेति** । यंस्यति । यच्छतु । अयच्छत् । यच्छेत् । यम्यात् । **अयंसीदिति** । यमरमेति । इट्सकौ । इट इटीति सिज्लोपः । नेटीति निषेधान्न हलन्तलक्षणा वृद्धिरिति भावः । अयंस्यत् ।

**तप संतापे इति** । अनिडयम् । तपति । तताप तेपतुः तेपुः । तेपिथ—ततप्थ तेपथुः तेप । तताप—ततप तेपिव तेपिम । **तप्तेति** । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । **अताप्सीदिति** । हलन्तलक्षणा वृद्धिरिति भावः । अतप्स्यत् । **निसस्तपतौ** । शेषपूरणेन सूत्रं व्याचष्टे—**षः स्यादिति** । अपदान्तस्य मूर्धन्य इत्यधिकारादिति भावः । निसः सकारस्य षः स्यात् तपधातौ परत इति यावत् । अनासेवने इत्येतद्व्याख्यास्यन् आसेवनशब्दं व्याचष्टे—**पौनःपुन्यमिति** । आसेवनशब्देन सह नञ्समास इत्यभिप्रेत्याह—**ततोऽन्यस्मिन्विषये इति** । आदेशत्वाभावात् पदान्तत्वाच्च अप्राप्ते वचनम् । **निष्टपतीति** । निष्कृष्य तपतीत्यर्थः । निसः सस्य षत्वे तकारस्य ष्टुत्वेन टः । आसेवने तु

त्यक्ता । अत्याक्षीत् । षञ्ज १८७ सङ्गे । 'दंशसञ्जस्वञ्जां शपि' ( सू २३९६ ) इति नलोपः । सजति । सङ्क्ता । दृशिर् १८८ प्रेक्षणे । पश्यति । (२४०४) **विभाषा सृजिदृशोः** । ७ । २ । ६५ ॥ आभ्यां थल इड् वा । (२४०५) **सृजिदृशोर्झल्यमकिति** । ६ । १ । ५८ ॥ अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ-ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्वादङ् वा । (२४०६)

---

टः । आसेवने तु न षत्वम् । **त्यज हानाविति** । हानिरुत्सर्गः । अयमनिट् । त्यजति । तत्याज तत्यजतुः तत्यजुः । संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ न । थलि तु भारद्वाजनियमाद्वेट् । तदाह—**तत्यजिथ तत्यक्थेति** । इडभावे चोः कुरिति भावः । **त्यक्तेति** । त्यक्ष्यति । त्यजतु । अत्यजत् । त्यजेत् । त्यज्यात् । **अत्याक्षीदिति** । हलन्तलक्षणा वृद्धिरिति भावः । अत्यक्ष्यत् ।

**षञ्ज सङ्गे इति** । षोपदेशोऽयमनिट् नोपधश्च । कृतानुस्वारपरसवर्णस्य निर्देशः । शपः पित्त्वेन कित्त्वाभावात्तस्मिन्परे 'अनिदिताम्' इति नलोपाप्रवृत्तेराह—**दंशसञ्जेति नलोप इति** । अनुस्वारपरसवर्णयोरसिद्धत्वादिति भावः । **सजतीति** । लिटि तु ससञ्ज । अतुसादौ तु अकित्त्वान्न नलोपः । ससञ्जतुः ससञ्जुः । थलि भारद्वाजनियमाद्वेट् । ससञ्जिथ-ससङ्क्थ । इडभावे जस्य कुत्वेन गकारे तस्य चर्त्वे सति अनुस्वारपरसवर्णसंपन्नस्य चवर्गपञ्चमस्य निवृत्तौ ककारे परेऽनुस्वारस्य परसवर्णो ङकारः । ससञ्जथुः ससञ्ज । ससञ्ज । ससञ्जिव ससञ्जिम । क्रादिनियमादिट् । **सङ्क्तेति** । तासि जस्य कुत्वेन गकारे तस्य चर्त्वे सति अस्य निवृत्तौ नस्य ङकार इति भावः । सङ्क्ष्यति । सजतु । असजत् । सजेत् । सज्यात् । असाङ्क्षीत् । हलन्तत्वाद्वृद्धिः । असङ्क्ष्यत् ।

**दृशिर् प्रेक्षणे इति** । इरित् । अनिट् च । **पश्यतीति** । शिति 'पाघ्राध्मा' इति पश्यादेश इति भावः । ददर्श ददृशतुः ददृशुः । थलि तु क्रादिनियमान्नित्यमिट् प्राप्तः । अजन्ताकारवत्त्वाभावात् 'अचस्तास्वत्' इति 'उपदेशेऽत्वतः' इति निषेधस्य चाप्राप्तेः ऋदन्तत्वाभावेन भारद्वाजनियमस्याप्रसक्तेः । तत्राह—**विभाषा सृजि** । पञ्चम्यर्थे षष्ठी । 'गमेरिट्' इत्यतः इडिति 'अचस्तास्वत्' इत्यतः थलीति चानुवर्तते । तदाह—**आभ्यामिति** । इडभावपक्षे 'अनुदात्तस्य' इति अमागमविकल्पे प्राप्ते—**सृजिदृशोः** । अम् अकिति इति च्छेदः । नित्यार्थमिदम् । **दद्रष्ठेति** । ददृश् थ इति स्थिते इडभावपक्षे अमागमे ऋकारस्य यणि व्रश्चादिना शस्य षत्वे थस्य ष्टुत्वेन ठ इति भावः । इट्पक्षे त्वाह—**ददर्शिथेति** । अझलादित्वादम् नेति भावः । **द्रष्टेति** । तासि अमागमे शस्य षत्वे तकारस्य ष्टुत्वेन टकार इति भावः । **द्रक्ष्यतीति** । अमागमे शस्य षत्वे षढोरिति कत्वे सस्य ष इति भावः । पश्यतु । अपश्यत् । पश्येत् । आशीर्लिङि आह—**दृश्यादिति** ।

**ऋदृशोऽङि गुणः । ७ । ४ । १६ ॥** ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । अङभावे—(२४०७) **न दृशः । ३ । १ । ४७ ॥** दृशश्च्लेः क्सो न । अद्राक्षीत् । दंश ९८९ दशने । दशनं दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तेषामप्ययमेव तात्पर्यम् । अर्थनिर्देशस्याधुनिकत्वात् । 'दंशसञ्ज—' ( सू २३९६ ) इति नलोपः । दशति ।

---

अभ्कलादित्वादम् नेति भावः । लुङि विशेषमाह—**इरित्त्वादङ् वेति** । अत्र अङ्पक्षे गुणनिषेधे प्राप्ते—**ऋदृशोऽङि** । ऋ इत्यङ्गविशेषणत्वात् तदन्तविधिः । तदाह—**ऋवर्णान्तानामिति । अङभावे इति** । अङभावपक्षे ' शल इगुपधात् ' इति क्सादेशे प्राप्ते सतीत्यर्थः । **न दृशः** । ' च्लेः सिच् ' इत्यतः च्लेरिति ' शल इगुपधात् ' इत्यतः क्स इति चानुवर्तते । तदाह—**दृशश्च्लेः क्सो नेति** । क्सादेशे तु अदृक्षदिति स्यादिति भावः । **अद्राक्षीदिति** । सिचि अमागमे ऋकारस्य यणि अकारस्य हलन्तलक्षणवृद्धौ शस्य षत्वे तस्य कत्वे सस्य षत्वमिति भावः । अदृक्षत् ।

**दंश दशने इति** । अयमनिट् नोपधश्च कृतानुस्वारनिर्देशः । **दंष्ट्राव्यापार इति** । हनुमूलगताः स्थूलदन्ताः दंष्ट्राः, तद्व्यापारः क्षतक्रियादिरूप इत्यर्थः । ननु दंशधातोर्ल्युटि दशनशब्दः । तत्र ' अनिदिताम् ' इति नकारस्य लोपो न संभवति ल्युटः क्ङित्त्वाभावात् । 'दंशसञ्जे'त्यपि नस्य लोपो न संभवति, तस्य शप्येव प्रवृत्तेः । तथाच दशन इत्यर्थनिर्देशः कथमित्यत आह—**पृषोदरादित्वादिति । अत एवेति** । दशनशब्दनिर्देशादेव नकारस्य लोप इत्यन्ये मन्यन्त इत्यर्थः । **तेषामपीति** । निपातनान्नकारलोप इति वदतामपि पृषोदरादिषु निपातनादित्यर्थ एव तात्पर्यं न तु धातुपाठे दंश दशने इत्यर्थनिर्देशे इति भावः । विनिगमनाविरहमाशङ्क्याह—**अर्थनिर्देशस्याधुनिकत्वादिति** । सर्वधातुष्वर्थनिर्देशस्य अपाणिनीयत्वादित्यर्थः । क्वचिदेव धातुष्वर्थनिर्देशः पाणिनीय इति भूधातौ निरूपितम् ।

अथ दशतीत्यादौ शपः पित्त्वेन अकित्त्वात् 'अनिदिताम्' इति नलोपाप्रवृत्तेराह—**दंशसञ्जेति नलोप इति । दशतीति** । अनुस्वारस्यासिद्धत्वादिति भावः । दंशसञ्जेत्यत्र शपीत्युक्तेरार्धधातुके नलोपो न । संयोगात्परत्वेन लिटः कित्त्वाभावादनिदितामित्यपि न । ददंश ददंशतुः ददंशुः । भारद्वाजनियमात्थलि वेट् । तदाह—**ददंशिथ ददंष्ठेति** । अनिट्पक्षे व्रश्चादिना शस्य षः थस्य ष्टुत्वेन ठ इति भावः । **दंष्टेति** । तासि व्रश्चादिना शस्य षत्वे तकारस्य ष्टुत्वमिति भावः ।

---

१ ऋधातोः सृधातोश्च ' सर्तिशास्त्यर्तिभ्यश्च ' इत्यङ् विधीयते, जॄधातोश्च ' जॄस्तम्भु ' इत्यङ्विधिरिति त्रय एव ऋवर्णान्ता अङि गुणभाज इति बोध्यम् ।

**ददंशिथ–ददंष्ठ। दंष्टा। दङ्क्ष्यति। दश्यात्। अदाङ्क्षीत्। कृष १९० विलेखने। विलेखनमाकर्षणम्। क्रष्टा–कर्ष्टा। क्रक्ष्यति–कर्क्ष्यति। 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' (वा १८२६)। अक्राक्षीत् अक्राष्टाम्। अकार्क्षीत् अकार्ष्टाम् अकार्क्षुः। पक्षे क्सः। अकृक्षत् अकृक्षताम् अकृक्षन्। दह १९१ भस्मीकरणे। देहिथ–ददग्ध। दग्धा। धक्ष्यति। अधाक्षीत् अदाग्धाम् अधाक्षुः। मिह १९२ सेचने। मिमेह। मिमेहिथ। मेढा। मेक्ष्यति। अमि-**

---

**दङ्क्ष्यतीति**। वृश्चादिना शस्य षत्वे तस्य कत्वे अनुस्वारस्य परसवर्णे ङकारे सस्य षत्वमिति भावः। दशतु। अदशत्। दशेत्। **दश्यादिति**। आशीर्लिङि 'अनिदिताम्' इति नलोप इति भावः। **अदाङ्क्षीदिति**। सिचि हलन्तलक्षणा वृद्धिः, शस्य षः, तस्य कः, अनुस्वारस्य परसवर्णेन ङः, सस्य षत्वमिति भावः। अदङ्क्ष्यत्।

**कृष विलेखने इति**। अनिडयम्। कर्षति। चकर्ष चकृषतुः चकृषुः। थलि अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्—चकर्षिथ चकृषथुः चकृष। चकर्ष चकृषिव चकृषिम। इति सिद्धवत्कृत्याह—**क्रष्टा कर्ष्टेति**। 'अनुदात्तस्य च' इति अम्विकल्पः। तकारस्य ष्टुत्वम्। **क्रक्ष्यति कर्क्ष्यतीति**। षस्य कत्वे सस्य षः। कर्षतु। अकर्षत्। कर्षेत्। कृष्यात्। 'शल इगुपधात्' इति च्लेः क्सादेशे प्राप्ते आह—**स्पृशमृशेति। अक्राक्षीदिति**। च्लेः क्सादेशाभावे सिचि 'अनुदात्तस्य चर्दुपधस्य' इत्यमि ऋकारस्य यणि हलन्तलक्षणवृद्धौ 'षढोः कः सि' इत्यनेन षस्य कत्वे सस्य षत्वमिति भावः। **अकार्क्षीदिति**। अमभावे सिचि वृद्धौ रूपम्। **पक्षे क्स इति**। च्लेः सिजभावपक्षे 'शल इगुपधात्' इति क्स इत्यर्थः। **अकृक्षदिति**। क्से सति, कित्त्वाद्गुणाभावे षस्य कः, सस्य ष इति भावः। अक्रक्ष्यत्—अकर्क्ष्यत्।

**दह भस्मीकरणे इति**। अनिट्। दहति। ददाह देहतुः देहुः। थलि तु भारद्वाजनियमाद्वेडित्याह—**देहिथ ददग्धेति**। इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ। अनिट्पक्षे तु 'दादेः' इति हस्य घः, 'झषस्तथोः' इति थस्य धः, घस्य जश्त्वेन ग इति भावः। देहथुः देह। ददाह—ददह देहिव देहिम। **दग्धेति**। तासि हस्य घः, तकारस्य धः, घस्य ग इति भावः। **धक्ष्यतीति**। हस्य घः, दस्य भष्, घस्य गः, तस्य चर्त्वेन कः, सस्य ष इति भावः। दहतु। अदहत्। दहेत्। दह्यात्। **अधाक्षीदिति**। सिचि हलन्तलक्षणा वृद्धिः। हस्य घः, दस्य भष्, घस्य गः, तस्य कः, सस्य ष इति भावः। **अदाग्धामिति**। सिचि वृद्धिः, हस्य घः, 'झलो झलि' इति सलोपः, 'झषस्तथोः' इति तकारस्य धः, घस्य ग इति भावः। **अधाक्षुरिति**। सिचि वृद्धिः, हस्य घः, दस्य

वत्। कित ९९३ निवासे रोगापनयने च। चिकित्सति। संशये प्रायेण विपूर्वः। 'विचिकित्सा तु संशयः' इत्यमरः। अस्यानुदात्तेत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार। निवासे तु केतयति।

दान ९९४ खण्डने। शान ९९५ तेजने। इतो वहत्यन्ताः स्वरितेतः। दीदांसति दीदांसते। शीशांसति। शीशांसते। अर्थविशेषे सन्। अन्यत्र दानयति।

---

भष्, घस्य गः, तस्य कः, सस्य ष इति भावः। अघार्क्षीः अघाग्धम् अदाग्ध। अघाक्षम् अघाक्ष्व अघाक्ष्म। अघक्षत्।

**मिह सेचने इति**। अनिट्। मेहति। मिमेह मिमिहतुः मिमिहुः। अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्। तदाह—**मिमेहिथेति**। मिमिहथुः मिमिह। मिमेह मिमिहिव मिमिहिम। **मेढेति**। तासि ढत्वधत्वष्टुत्वढलोपाः। **मेक्ष्यतीति**। हस्य ढः, तस्य कः, सस्य षः। मेहतु। अमेहत्। मेहेत्। मिह्यात्। लुङि 'शल इगुपधात्' इति क्सः। कित्त्वान्न गुणः। हस्य ढः, तस्य कः, सस्य षः। तदाह—**अमिक्षदिति**। अमेक्ष्यत्। **कित निवासे रोगापनयने चेति**। परस्मैपदिषु पाठात् अयं परस्मैपदी। अर्थद्वयमात्रमत्र निर्दिष्टम्। अर्थनिर्देशस्य उपलक्षणत्वात् अर्थान्तरेषु वृत्तिः। तत्र 'कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च' इति निबद्धेष्वर्थेषु 'गुप्तिज्किद्भ्यः सन्' इति सन्विहितः। तदाह—**चिकित्सतीति**। 'सन्यतः' इति इत्वे हलादिशेषे अभ्यासचुत्वे चिकित्सेति सन्नन्तं, तस्माल्लटि शपि चिकित्सतीति रूपम्। अस्य सनः 'धातोः' इति विहितत्वाभावादनार्धधातुकत्वान्न लघूपधगुणः नापि इडागम इति प्रागुक्तम्। चिकित्सांचकारेत्यादि सुगमं जुगुप्सतिवत्। **संशये इत्यादि**। व्यक्तम्। **निवासे त्विति**। व्याधिप्रतीकाराद्यर्थपञ्चकादर्थान्तरे चुरादित्वस्योक्तत्वादिति भावः।

**दान खण्डने। शान तेजने इति**। तेजनम् तीक्ष्णीकरणम्। **इत इति**। 'दान खण्डने' इत्यारभ्य 'वह प्रापणे' इत्येतत्पर्यन्ताः स्वरितेत इत्यर्थः। तत्र धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वात् यदा दानधातुरार्जवे शानधातुस्तु निशाने वर्तते, तदा 'मान्बधदान्शान्' इति सनि, 'सन्यङोः' इति द्वित्वे, अभ्यासह्रस्वे, तस्य 'सन्यतः' इति इत्वे, तस्य 'मान् बध' इति दीर्घे सति, नकारस्यानुस्वारे, दीदांसशीशांसाभ्यां लटि स्वरितानुबन्धस्य केवलयोरचरितार्थत्वात्, कर्तृगे फले तङि शपि दीदांसते शीशांसते इति रूपम्। परगामिनि तु फले परस्मैपदे तिपि शपि दीदांसति शीशांसति इति रूपम्। तदाह—**दीदांसते इत्यादि। शीशांसतीति**। तीक्ष्णीकरोतीत्यर्थः। **अर्थविशेषे इति**। आर्जवे निशाने चार्थे सनित्यर्थः। **अन्यत्रेति**। आर्जवनिशानाभ्यामन्यत्र णिजन्तात्परस्मैपदमेवेत्यर्थः। अर्थान्तरे अननुबन्धकाश्चुरादयः इत्युक्तेरिति भावः।

**शानयति । डु पचष् ९९६ पाके । पचति पचते । पेचिथ-पपक्थ । पेचे । पक्ता । पक्षीष्ट । षच ९९७ समवाये । सचति सचते । भज ९९८ सेवायाम् । बभाज भेजतुः भेजुः । भेजिथ-बभक्थ । भक्ता । भक्ष्यति भक्ष्यते । अभाक्षीत् अभक्त । रञ्ज ९९९ रागे । नलोपः । रजति रजते । रज्यात् रङ्क्षीष्ट । अराङ्क्षीत् अराङ्क्ताम् । अरङ्क्त । शप १००० आक्रोशे । आक्रोशो विरुद्धानु-**

---

**डु पचष् पाके इति** । डुः षकारः चकारादकारश्च इत् । स्वरितेत्त्वादुभयपदी तदाह—**पचति पचते इति** । पपाच पेचतुः पेचुः । भारद्वाजनियमात्थलि वेट् तदाह--**पेचिथ पपक्थेति** । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । अनिट्-पक्षे तु 'चोः कुः' इति भावः । पेचथुः पेच । पपाच---पपच पेचिव पेचिम । क्रादि-नियमादिट् । **पेचे इति** । पेचाते पेचिरे । पेचिषे पेचाथे पेचिध्वे । पेचे पेचिवहे पेचिमहे । क्रादिनियमादिट् । **पक्तेति** । तासि 'चोः कुः' । पक्ष्यति पक्ष्यते । पचतु पचताम् । अपचत् अपचत । पचेत् । **पक्षीष्टेति** । आशीर्लिङि तङि सीयुटि 'चोः कुः' । षत्वम् । अपाक्षीत् । अपक्त । अपक्षाताम् । अपक्ष्यत् अपक्ष्यत । षच-धातुः षोपदेशः । तदाह--**सचति सचते इति** । सेडयम् । ससाच सेचतुः सेचुः । सेचिथ सेचथुः सेच । ससाच–ससच सेचिव सेचिम।सेचे। सेचिषे । सेचिवहे सेचिमहे। सच्यात् सचिषीष्ट। असाचीत्–असचीत् असचिष्ट । भजधातुरनिट् । भजति । किति लिटि वैरूप्यापादकादेशादित्वात् 'अत एकहल्मध्ये' इत्यप्राप्तौ 'तॄफल' इत्येत्वाभ्यास-लोपौ । तदाह--**भेजतुरिति** । भारद्वाजनियमात्थलि वेट् । तदाह--**भेजिथ बभक्थेति** । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ इति भावः । भेजिव भेजिम । क्रादिनियमादिट् । भेजे । भेजिषे । भेजिवहे । **भक्तेत्यादि** । सुगमम् ।
**रञ्ज रागे इति**।नोपधोऽयम्। कृतानुस्वारपरसवर्णनिर्देशः।अनिडयम्।शपः पित्त्वेन ङित्त्वाभावात् 'अनिदिताम्' इत्यप्राप्तावपि 'रञ्जेश्च' इति शपि नलोपः । तदाह—**रजति रजते इति** । संयोगात्परत्वाल्लिटो न कित्त्वम् । ररञ्ज ररञ्जतुः । भारद्वाज-नियमात्थलि वेट् । ररञ्जिथ–ररङ्क्थ । अनिट्पक्षे जस्य कुत्वेन गः । ततोऽनुस्वार-परसवर्णञकारनिवृत्तौ गस्य चर्त्वेन कः । नस्यानुस्वारे तस्य परसवर्णो ङकार इति भावः । ररञ्जिव ररञ्जिम । क्रादिनियमादिट् । रङ्क्ता । रङ्क्ष्यति । रङ्क्ष्यते । रजतु रजताम् । अरजत् अरजत । रजेत् रजेत । आशीर्लिङि यासुटः कित्त्वात् 'अनिदिताम्' इति नलोपः । तदाह—**रज्यादिति । रङ्क्षीष्टेति** । आत्मनेपदे लिङः सीयुटि जस्य कुत्वेन गः, ततः परसवर्णसंपन्नञकारनिवृत्तिः, गस्य कः, नस्य परसवर्णेन ङः, षत्वमिति भावः । **अराङ्क्षीदिति** । सिचि हलन्तलक्षणावृद्धौ कुत्वादि पूर्ववत् । अनेकहल्व्यवधानेऽपि हलन्तलक्षणा वृद्धिः प्रवर्तते इति भाष्ये स्पष्टम् । **अराङ्क्तामिति** । 'झलो झलि' इति सलोपः । कुत्वादि पूर्ववत् । **अरङ्क्तेति** । लुङस्तङि प्रथमपुरुषैकवचने 'झलो झलि' इति सलोपे कुत्वादि ।

ध्यानम्। शशाप शेपे। अशाप्सीत् अशप्त। त्विष १००१ दीप्तौ। त्वेषति त्वेषते। तित्विषे। त्वेष्टा। त्वेक्ष्यति त्वेक्ष्यते। त्विष्यात् त्विक्षीष्ट। अत्विक्षत्। अत्विक्षत अत्विक्षाताम् अत्विक्षन्त। यज १००२ देवपूजासङ्गतिकरणदानेषु। यजति। यजते। (२४०८) **लिट्यभ्यासस्योभयेषाम्**। ६। १। १७॥ वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि। इयाज। (२४०९)

---

**शप आक्रोशे इति**। अनिडयम्। भारद्वाजनियमात्थलि वेट्। वमादौ तु क्रादिनियमादिट्। **अशाप्सीदिति**। हलन्तलक्षणा वृद्धिः। **अशप्तेति**। 'झलो झलि' इति सलोपः। अशप्साताम्। त्विषधातुरनिट्। शपि लघूपधगुणः। तदाह-**त्वेषति त्वेषते इति**। तित्वेष तित्विषतुः तित्विषुः। तित्वेषिथ तित्विषथुः तित्विष। तित्वेष तित्विषिव तित्विषिम। क्रादिनियमादिट्। **तित्विषे इति**। तित्विषाते तित्विषिरे। तित्विषिषे तित्विषाथे तित्विषिध्वे। तित्विषे तित्विषिवहे तित्विषिमहे। **त्वेष्टेति**। तासि तकारस्य ष्टुत्वम्। **त्वेक्ष्यति त्वेक्ष्यते इति**। स्ये कत्वषत्वे। त्वेषतु त्वेषताम्। अत्वेषत् अत्वेषत। त्वेषेत् त्वेषेत। **त्विष्यादिति** यासुटः आशीर्लिङि कित्त्वान्न लघूपधगुणः। **त्विक्षीष्टेति**। 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः। लुङि परस्मैपदे 'शल इगुपधात्' इति च्लेः क्सः। कित्त्वान्न गुणः। तदाह--**अत्विक्षदित्यादि**। लुङि आत्मनेपदे च्लेः क्सादेशं मत्वा आह--**अत्विक्षतेति**। **अत्विक्षन्तेति**। अत्विक्ष झ इति स्थिते 'क्सस्याचि' इत्यन्त्यलोपासंभवादतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशासंभवादन्तादेशे क्सस्यान्त्यलोपे पररूपे वा रूपमिति भावः।

**यज देवपूजेति**। अनिडयम्। **यजति यजते इति**। देवान् पूजयति सङ्गमयति ददाति वेत्यर्थः। णलि द्वित्वादौ तु ययाज इति स्थिते—**लिट्यभ्यासस्योभयेषाम्**। 'ष्यङः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तते। 'वचिस्वपियजादीनाम्' इति सूत्रोपात्ताः 'ग्रहिज्यावयि' इति सूत्रोपात्ताश्च उभयशब्देन गृह्यन्ते। तदाह—**वच्यादीनां ग्रह्यादीनां चेति**। अत्र वच्यादीनामित्यनेन वचिः स्वपिः यजादयश्च विवक्षिताः। 'यज देवपूजा' इत्यारभ्य 'टु ओ श्वि गतिवृद्ध्योः' इत्येतत्पर्यन्ता यजादयः। तदुक्तम्–'यजिवपिर्वहिश्चैव वसिर्वेञ्व्येञ इत्यपि। ह्वेञ् वदिः श्वयतिश्चैव यजाद्याः स्युरिमे नव।' इति। तेष्वनन्तर्भावाद्वचिस्वप्योः पृथग्ग्रहणम्। ग्रह्यादीनामित्यनेन तु ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतयो विवक्षिताः। **इयाजेति**। अभ्यासयकारस्य संप्रसारणे इकारे 'संप्रसारणाच्च' इति पूर्वरूपमिति भावः। यज् अतुस् इति स्थिते द्वित्वे अभ्यासयकारस्य संप्रसारणे पूर्वरूपे च इयजतुरिति प्राप्ते—**वचिस्वपि**। वचिस्वपीति इका निर्देशः। सौत्रः संप्रसारणाभावः। आदिशब्दो यजिनैव संबध्यते न

**वचिस्वपियजादीनां किति । ६ । १ । १५ ॥** वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति । पुनःप्रसङ्गविज्ञानाद्द्वित्वम् । ईजतुः ईजुः । **इयजिथ-इयष्ठ । ईजे । यष्टा । यक्ष्यति यक्ष्यते । इज्यात् यक्षीष्ट । अयाक्षीत् अयष्ट । डु वप् १००३ बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान् वपति । उवाप ऊपे । वप्ता । उप्यात् वप्सीष्ट । अवाप्सीत् । अवप्त । वह १००४ प्रापणे । उवाह । उवहिथ । 'सहिवहोरोदवर्णस्य'**

---

तु वचिस्वपिभ्याम्, तथा सति हि वच्यादेः स्वप्यादेर्यजादेश्चेत्यर्थः स्यात् । तथा सति पृथक्स्वपिग्रहणं व्यर्थं स्यात्, अदादिगणे लुग्विकरणे 'वच परिभाषणे' इत्यारभ्य षष्ठस्य 'ञि ष्वप् शये' इत्यस्य वच्यादिग्रहणेनैव सिद्धेः । तदाह—**वचिस्वप्योर्यजादीनां चेति ।**

ननु यज् अतुस् इति स्थिते द्वित्वात्परत्वात्संप्रसारणे कृते 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायेन द्वित्वस्य कथं प्राप्तिरित्याशङ्क्याह—**पुनः प्रसङ्गेति । ईजतुरिति ।** यज् अतुस् इति स्थिते संप्रसारणे पूर्वरूपे च कृते द्वित्वे सवर्ण-दीर्घ इति भावः । एवं चात्र किति लिटि 'वचिस्वपि' इति सूत्रम्, अकिति लिटि तु 'लिट्यभ्यासस्य' इति सूत्रमिति स्थितिः । भारद्वाजनियमात्थलि वेट् । कृते द्वित्वे अकित्त्वाद्वचिस्वपीत्यप्रवृत्तौ 'लिट्यभ्यासस्य' इत्यभ्यासयकारस्य संप्रसारणम् । तदाह—**इयजिथ इयष्ठेति ।** अनिट्पक्षे व्रश्चादिना जस्य षत्वे ष्टुत्वेन थस्य ठः । ईजथुः ईज । इयाज-इयज ईजिव ईजिम । **ईजे इति ।** 'असंयोगात्' इति कित्त्वात् 'वचिस्वपि' इति संप्रसारणे कृते द्वित्वे सवर्णदीर्घ इति भावः । ईजाते ईजिरे । क्रादिनियमादिट् । ईजिषे ईजाथे ईजिध्वे । ईजे ईजिवहे ईजिमहे । **यष्टेति ।** तासि व्रश्चादिना जस्य षत्वे ष्टुत्वेन तकारस्य टः । **यक्ष्यति यक्ष्यते इति ।** व्रश्चादिना जस्य षत्वे 'षढोः' इति षस्य कत्वे सस्य षत्वमिति भावः । यजतु यजताम् । अयजत् अयजत । यजेत् यजेत । आशीर्लिङि आह—**इज्या-दिति ।** यासुटः कित्त्वात् 'वचिस्वपि' इति संप्रसारणमिति भावः । **यक्षीष्टेति ।** आशीर्लिङि आत्मनेपदे प्रथमैकवचने सीयुटि जस्य षत्वे तस्य कत्वे सस्य षत्वमिति भावः । **अयाक्षीदिति ।** सिचि हलन्तलक्षणा वृद्धिः । जस्य षः, तस्य कः, सस्य ष इति भावः । **अयष्टेति ।** अयज् स् त इति स्थिते 'झलो झलि' इति सलोपे, जस्य षः, ष्टुत्वेन तकारस्य ट इति भावः । अयक्षाताम् अयक्षत । अयक्ष्यत्, अयक्ष्यत ।

**डु वप् बीजसंताने इति ।** प्ररोहार्थं बीजानां क्षेत्रेषु प्रक्षेपणे इत्यर्थः ।

---

१ यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ् इत्यपि ।
ह्वयतिः श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥ १ ॥

( सू २३५७ ) । उवोढ । ऊहे । वोढा । वक्ष्यति वक्ष्यते । अवाक्षीत् अवोढाम् अवाक्षुः । अवोढ अवक्षाताम् अवक्षत । अवोढाः अवोढ्वम् । वस १००५ निवासे । परस्मैपदी । वसति । उवास । (२४१०) **शासिवसिघसीनां च ।**

---

तदाह—**क्षेत्रे विकिरणमिति।** वपिः प्रकिरणार्थ इति 'सन्यङोः' इत्यत्र भाष्यम्। **गर्भाधानं चेति ।** 'अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः' इत्यादौ तथा दर्शनादिति भावः । **अयं छेदनेऽपीति ।** वर्तत इति शेषः । **केशान् वपतीति ।** छिनत्तीत्यर्थः । अनिडयम् । **उवापेति ।** 'लिट्यभ्यासस्य' इत्यकित्यभ्यासस्य संप्रसारणमिति भावः । किति तु 'वचिस्वपि' इति द्वित्वात्प्राक्संप्रसारणे कृते द्वित्वम् । ऊपतुः ऊपुः । उवपिथ—उवप्थ ऊपथुः ऊप । उवाप—उवप ऊपिव ऊपिम । **ऊपे इति ।** ऊपाते ऊपिरे । ऊपिषे ऊपाथे ऊपिध्वे । ऊपे ऊपिवहे ऊपिमहे । **वप्तेति ।** वप्स्यति वप्स्यते । वपतु वपताम् । अवपत् अवपत । वपेत् वपेत । **उप्यादिति ।** आशिषि यासुटः कित्त्वात् 'वचिस्वपि' इति संप्रसारणम् । **वप्सीष्टेति ।** सीयुटि रूपम् । **प्रण्यवाप्सीदिति ।** लुङि परस्मैपदे सिचि हलन्तलक्षणा वृद्धिः । 'नेर्गद' इति णत्वम् । अवाप्ताम् अवाप्सुः । **अवप्तेति ।** आत्मनेपदे लुङि 'झलो झलि' इति सलोपः । अवप्साताम् ।

**वह प्रापणे इति ।** अयमनिट् । वहति वहते । **उवाहेति ।** 'लिट्यभ्यासस्य' इति अकिति अभ्यासस्य संप्रसारणमिति भावः । किति 'वचिस्वपि' इति संप्रसारणे कृते द्वित्वम् । ऊहतुः ऊहुः । भारद्वाजनियमात्थलि वेट् । तदाह—**उवहिथेति ।** 'न शसदद' इति निषेधात् 'थलि च सेटि' इति न भवति । अथ थलि अनिट्पक्षे आह—**सहिवहोरोदवर्णस्येति ।** सहिवहोरवर्णस्य ओत्स्याड्ढ्लोपे परत इत्यर्थः । 'ढ्लोप' इति दीर्घं बाधित्वा ओत्त्वमिति भावः । **उवोढेति ।** उवह् थ इति स्थिते ढत्वधत्वष्टुत्वढलोपाः ओत्त्वं चेति भावः । ऊहथुः ऊह । उवाह—उवह ऊहिव ऊहिम । क्रादिनियमादिट् । **ऊहे इति ।** ऊहाते ऊहिरे । ऊहिषे ऊहाथे ऊहिध्वे—ऊहिढ्वे । ऊहे ऊहिवहे ऊहिमहे । **वोढेति ।** तासि ढत्वधत्वष्टुत्वढलोपाः ओत्त्वं च । लृटि स्ये, हस्य ढः, तस्य कः, षत्वम् । तदाह—**वक्ष्यति वक्ष्यते इति ।** वहतु वहताम् । अवहत् अवहत । वहेत् वहेत । उह्यात् । **अवाक्षीदिति ।** हलन्तलक्षणवृद्धौ ढकषाः प्राग्वत् । **अवोढामिति ।** 'झलो झलि' इति सलोपे ढत्वधत्वष्टुत्वढलोपाः ओत्त्वं चेति भावः । **अवाक्षुरिति ।** उसि सिचि वृद्धौ ढकषाः । अवाक्षीः अवोढम् अवोढ । अवाक्षम् अवाक्ष्व अवाक्ष्म । **अवोढेति ।** लुङि आत्मनेपदे प्रथमपुरुषैकवचने अवह् स् त इति स्थिते सलोपः ढत्वधत्वष्टुत्वढलोपाः ओत्त्वं च । **अवक्षातामिति ।** आतामि सिचि ढकषा इति भावः । **अवक्षतेति ।** 'आत्मनेपदेष्वनतः' इत्यदादेशः । **अवोढ्वमिति ।** अवक्षि अवक्ष्वहि अवक्ष्महि।

८।३।६०॥ इण्कुभ्यां परस्यैषां सस्य षः स्यात्। ऊषतुः ऊषुः। उवसिथ-उवस्थ। वस्ता। 'सः स्यार्धधातुके' (सू २३४२)। वत्स्यति। उष्यात्। अवात्सीत् अवात्ताम्। वेञ् १००६ तन्तुसन्ताने। वयति वयते (२४११) **वेञो वयिः**। २।४।४१॥ वा स्याल्लिटि। इकार उच्चारणार्थः। उवाय। (२४१२) **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च**। ६।१।१६॥ एषां किति ङिति च संप्रसारणं स्यात्। इति यकारस्य

---

अवक्ष्यत् अवक्ष्यत। इति वहत्यन्ताः स्वरितेतो गताः।

वसधातुरनिट्। अकिति लिटि परे 'लिट्यभ्यासस्य' इत्यभ्यासस्य संप्रसारणम्। तदाह—**उवासेति**। किति तु 'वचिस्वपि' इति संप्रसारणे कृते द्वित्वादौ ऊस् अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे—**शासिवसि**। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'इण्कोः' इति 'अपदान्तस्य मूर्धन्यः' इति चाधिकृतम्। तदाह–**इण्कवर्गाभ्यामिति**। भारद्वाजनियमात्थलि वेट् इति मत्वा आह—**उवसिथ उवस्थेति**। 'न शसदद' इति निषेधात् 'थलि च सेटि' इति न भवति। ऊषथुः ऊष। उवास—उवस ऊषिव ऊषिम। क्रादिनियमादिट्। वस् स्य ति इति स्थिते आह—**सः स्यार्धधातुके इति**। अनेन सकारस्य तकार इति भावः। वसतु। अवसत्। वसेत्। **उष्यादिति**। आशीर्लिङि यासुटः कित्त्वात् वस्य संप्रसारणे 'शासिवसि' इति षत्वमिति भावः। **अवात्सीदिति**। सिचि हलन्तलक्षणावृद्धौ सस्य तकारः। **अवात्तामिति**। अवस् स् तामिति स्थिते वृद्धौ 'झलो झलि' इति सलोपे प्रत्ययलक्षणमाश्रित्य सकारादार्धधातुकपरत्वात् धातुसकारस्य 'सः सि' इति तकारः। वस्तुतस्तु सिज्लोपस्यासिद्धत्वात् 'सः सि' इति तकारे सिज्लोप इति बोध्यम्। अवात्सुः। अवात्सीः अवात्तम् अवात्त। अवात्सम् अवात्स्व अवात्स्म। अवत्स्यत्।

वेञ्धातुरनिट्। ञित्त्वादुभयपदी। तन्तुसन्तानः पटनिर्माणार्थं तन्तूनां तिर्यक्प्रसारणविशेषः। **वयति वयते इति**। शपि अयादेशः। **वेञो वयिः**। शेषपूरणेन सूत्रं व्याचष्टे—**वा स्याल्लिटीति**। 'लिट्यन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवृत्तेरिति भावः। **उच्चारणार्थ इति**। इकारस्य इत्संज्ञकत्वे तु नुम् स्यादिति भावः। **उवायेति**। णलि वयादेशे यजादित्वादकिति लिटि परे 'लिट्यभ्यासस्य' इति वकारस्य संप्रसारणे उपधावृद्धिरिति भावः। अत्र यकारस्य तु न संप्रसारणम्, 'लिटि वयो यः' इति तन्निषेधस्यानुपदमेव वक्ष्यमाणत्वादिति भावः। यद्यपि णलि वयादेशाभावेऽपि द्वित्वे अभ्यासस्य संप्रसारणे 'अचो ञ्णिति' इति वृद्धौ आयादेशे उवायेति सिध्यति। तथापि ऊयतुरित्याद्यर्थं वयादेशस्य आवश्यकत्वादिहापि वयादेशो न्याय्यत्वादुपन्यस्तः। वे अतुस् इति स्थिते वयादेशे कृते—**ग्रहिज्या**। चकारेण 'वचिस्वपियजादीनाम्' इत्यतः कितीति समुच्चीयते। व्यङः संप्रसारणमि-

प्राप्ते—(२४१३) **लिटि वयो यः । ६ । १ । ३८ ॥** वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः ऊयुः । (२४१४) **वश्चास्यान्यतरस्यां किति । ६ । १ । ३६ ॥** वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः ऊवुः । उवयिथ । वयस्तासावभावात्थलि नित्यमिट् । स्थानिवद्भावेन ञित्त्वात्तङ् । ऊये ऊवे । वयादेशाभावे—(२४१५) **वेञः । ६ । १ । ४० ॥** वेञो न संप्रसारणं स्याल्लिटि । ववौ ववतुः ववुः । वविथ—ववाथ । ववे । वाता । ऊयात् वासीष्ट ।

---

त्यनुवर्तते । तदाह—**एषामित्यादि ।** अत्र परस्मैपदिग्रह्यादिसाहचर्यात् 'अय वय-पय' ग तौ इति पठितस्यात्मनेपदिनो वयेर्न ग्रहणम् । यजादित्वादेव वयेः संप्रसारणे सिद्धे अत्र वयग्रहणं स्पष्टार्थमिति भाष्ये स्पष्टम् ।

**इति यकारस्य प्राप्ते इति ।** 'न संप्रसारणे संप्रसारणम्' इति लिङ्गा-दन्त्यस्य यणः पूर्वं संप्रसारणमिति विज्ञानाद्यकारस्य संप्रसारणे प्राप्ते सतीत्यर्थः । **लिटि वयो । संप्रसारणं नेति ।** 'न संप्रसारणे संप्रसारणम्' इत्यतः तद-नुवृत्तेरिति भावः । तथा च यकारस्य संप्रसारणनिषेधे वकारस्य संप्रसारणमिति भावः । तदाह—**ऊयतुरिति । वश्चास्य ।** 'लिटि वयो यः' इत्यनुवर्तते । तदाह—**वयो यस्येत्यादि । उवयिथेति ।** अकित्त्वान्न वः । अजन्तत्वादकार-वत्त्वाच्च थलि इड्विकल्पमाशङ्क्याह—**वयस्तासावभावात्थलि नित्यमिडि-ति ।** वयेर्लिट्येव विहितत्वेन तासावभावात् 'अचस्तास्वत्' इति 'उपदेशेऽत्वतः' इति च इण्निषेधाप्रसक्त्या क्रादिनियमान्नित्यमिडित्यर्थः । 'यस्तासावस्ति नित्या-निट् च' इति भाष्यम् । ऊयथुः–ऊवथुः ऊय–ऊव ऊयिव–ऊविव ऊयिम—ऊविम । ननु वयेरञित्त्वात् कथमुभयपदित्वमित्यत आह—**स्थानिवद्भावेनेति । ऊये ऊवे इति ।** 'वश्चास्यान्यतरस्याम्' इति वत्वविकल्पः । वत्वाभावे 'लिटि वयो यः' इति यकारस्य संप्रसारणनिषेधः । वकारस्य 'ग्रहिज्या' इति 'वचि-स्वपि' इति वा संप्रसारणम् । ऊयाते ऊयिरे । ऊयिषे ऊयाथे ऊयिध्वे । ऊये उयि-वहे ऊयिमहे । क्रादिनियमादिट् । एवं ऊवाते ऊविरे इत्यादि ।

**वयादेशाभाव इति ।** यजादित्वात् 'लिट्यभ्यासस्य' इति 'वचिस्वपि' इति च संप्रसारणे प्राप्ते सतीति शेषः । **वेञः ।** 'लिटि वयो यः' इत्यतो लि-टीति 'न संप्रसारणे संप्रसारणम्' इत्यतो न संप्रसारणमिति चानुवर्तते । तदाह—**वेञो नेति ।** अत्र कितीति नानुवर्तते । तदाह—**ववाविति ।** णलि संप्रसारण-निषेधे 'आदेच उपदेशे' इत्यात्त्वे 'आत औ णलः' इत्यौभावे 'वृद्धिरेचि' इति वृद्धौ रूपम् । **ववतुरिति ।** 'आदेचः' इत्यात्त्वे 'आतो लोपः' । **एवं** ववुः । भारद्वाजनियमात्थलि वेट्, वेञस्तासावनिट्कत्वात् । तदाह—**वविथ ववाथेति ।** इट्पक्षे अकित्त्वेऽपि इट्परत्वादाल्लोप इति भावः । ववथुः वव । ववौ

**अवासीत्।** व्येञ् १००७ संवरणे। व्ययति व्ययते। (२४१६) **न व्यो लिटि।** ६।१।४६॥ व्येञ आत्वं न स्याल्लिटि। वृद्धिः। परमपि हलादिशेषं बाधित्वा यस्य संप्रसारणम्। उभयेषांग्रहणसामर्थ्यात्। अन्यथा वच्यादीनां ग्रहादीनां च.नुवृत्यैव सिद्धे किं तेन। विव्याय विव्यतुः विव्युः। 'इडत्यर्ति—' (सू २३८४) इति नित्यमिट्। विव्ययिथ। विव्याय—विव्यय। विव्ये।

---

वविव वविम। क्रादिनियमादिट्। **ववे इति**। ववाते वविरे। वविषे ववाथे ववि- ध्वे। ववे वविवहे वविमहे। **वातेति**। लुटि तासि आत्वम्। वास्यति वास्यते। वयतु वयताम्। अवयत् अवयत। वयेत् वयेत। **ऊयादिति**। आशीर्लिङि या- सुटि कित्त्वात् 'वचिस्वपि' इति संप्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः। **वासीष्टेति**। आशीर्लिङि आत्मनेपदे, सीयुटि आत्वे रूपम्। वासीयास्ताम्। **अवासीदिति**। आत्वे कृते इट्सकौ। अवास् इ स् ईदिति स्थिते 'इट ईटि' इति सिज्लोपः। अवासिष्टामित्यादि। आत्मनेपदे, अवास्त अवासातां इत्यादि। अवास्यत् अवास्यत।

**व्येञ् संवरणे इति**। ञित्त्वादुभयपदी। अनिट्। **व्ययति व्ययते इति**। शपि अयादेशः। णलादौ तु आत्वे विव्यौ विव्यतुरित्यादि प्राप्तम्। तत्राह—**न व्यो लिटि**। व्ये इत्यस्य कृतात्वस्य षष्ठ्यन्तस्य व्य इति निर्देशः। **आत्वमिति**। 'आदेच उपदेशे' इत्यतः आदित्यनुवृत्तेरिति भावः। **वृद्धि- रिति**। णलि व्ये अ इति स्थिते 'अचो ञ्णिति' इति वृद्धिरित्यर्थः। तथाच व्यै अ इति स्थितम्। ननु तत्र द्वित्वे 'लिट्यभ्यासस्य' इत्यभ्यासे यकारस्य संप्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे विव्याय इति रूपं वक्ष्यति। तदयु- क्तम्, संप्रसारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य संप्रसा- रणे उकारे सति उव्यायेत्यापत्तेरित्यत आह—**परमपीति। उभयेषामिति।** 'लिट्यभ्यासस्य' इति सूत्रे उभयेषामिति ग्रहणसामर्थ्यादित्यर्थः। तदेवोपपाद- यति—**अन्यथेति**। 'वचिस्वपियजादीनाम्' इत्यस्य 'ग्रहिज्यावयिव्यधिवष्टि- विचतिवृश्चतिपृच्छतिभृज्जतीनाम्' इत्यस्य च स्वरितत्वादेवात्रानुवृत्त्यैव सिद्धे पुन- 'लिट्यभ्यासस्य' इत्यत्र उभयेषांग्रहणं पुनर्विधानार्थम्। तथाच वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्याल्लिटीति द्विर्विधानं लब्धम्। तत्र द्वितीयं विधानं निय- मार्थम्—उभयेषामभ्यासस्य संप्रसारणमेव स्यान्नेतरदिति। तेनाभ्यासे एतत्सं- प्रसारणविषये कार्यान्तरनिवृत्तिः सिद्धेत्यर्थः। तथाच प्रकृते अभ्यासयकारस्य संप्र- सारणे सिद्धं रूपमाह—**विव्यायेति। विव्यतुः विव्युरिति**। 'वचिस्वपि' इति संप्रसारणे द्वित्वे यणिति भावः।

थलि भारद्वाजनियमादिड्विकल्पमाशङ्क्याह—**इडत्यर्तीति। विव्ययि-**

व्याता । वीयात् । व्यासीष्ट । अव्यासीत् अव्यास्त । ह्वेञ् १००८ स्पर्धायां शब्दे च । ह्वयति ह्वयते । (२४१७) अभ्यस्तस्य च । ६ । १ । ३३ ॥ अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं स्यात् । ततो द्वित्वम् । जुहाव जुहुवतुः जुहुवुः । जुहोथ-जुहविथ । जुहुवे । ह्वाता । हूयात् ह्वासीष्ट । (२४१८) लिपि-

---

थेति । अकित्त्वादभ्यासस्य संप्रसारणमिति भावः । विव्यथुः विव्य । **विव्याय विव्ययेति** । अकित्वादभ्यासस्य संप्रसारणे णित्त्वविकल्पाद्वृधिविकल्प इति भावः । विव्यिव विव्यिम । **विव्ये इति** । कित्त्वात् ' वचिस्वपि ' इति संप्रसारणे पूर्वरूपे वि इत्यस्य द्वित्वे यणिति भावः । विव्याते विव्यिरे । विव्यिषे विव्याथे विव्यिध्वे । विव्ये विव्यिवहे विव्यिमहे । **व्यातेति** । तासि एकारस्य आत्त्वम् । व्यास्यति व्यास्यते । व्ययतु व्ययताम् । अव्ययत् अव्ययत । व्ययेत् व्ययेत । **वीयादिति** । कित्त्वात् ' वचिस्वपि ' इति संप्रसारणे पूर्वरूपे ' अकृत्सार्वधातुकयोः ' इति दीर्घः । वीयास्ताम् । **व्यासीष्टेति** । आशीर्लिङि सीयुटि आत्त्वम् । **अव्यासीदिति** । लुङि सिचि आत्त्वे इट्सकोः सिज्लोपः । अव्यासिष्टामित्यादि । **अव्यास्तेति** । लुङि आत्मनेपदे अव्ये स् त इति स्थिते आत्त्वमिति भावः । अव्यासातामित्यादि । अव्यास्यत् अव्यास्यत ।

ह्वेञ्धातुरनिट् । ञित्त्वादुभयपदी । **शब्दे चेति** । आकारणार्थः आगच्छेत्यादिशब्दोऽत्र विवक्षितः । **ह्वयति ह्वयते इति** । शपि अयादेशः । णलादौ अकिति ' लिट्यभ्यासस्य ' इति अभ्यासस्यैव संप्रसारणे प्राप्ते—**अभ्यस्तस्य च** । ' ह्वः संप्रसारणम् ' इत्यनुवर्तते । ह्व इति कृतात्त्वस्य ह्वे इत्यस्य षष्ठ्यन्तम् । तथाच अभ्यस्तीभूतस्य ह्वेञः संप्रसारणमिति लभ्यते । तथा सति णलि ह्वे अ इति स्थिते द्वित्वे कृते ' उभे अभ्यस्तम् ' इत्यभ्यस्तसंज्ञायामुत्तरखण्डस्य संप्रसारणे कृते पूर्वखण्डस्याभ्यासस्य ' न संप्रसारणे संप्रसारणम् ' इति निषेधः स्यादित्यत आह—**अभ्यस्तीभविष्यत इति** । ननु यद्यभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं तर्हि द्वित्वं बाधित्वा परत्वात्संप्रसारणे सति ' विप्रतिषेधे यद्बाधितं तद्बाधितम् ' इति न्यायात् द्वित्वं न स्यादित्यत आह—**ततो द्वित्वमिति** । संप्रसारणानन्तरं द्वित्वमित्यर्थः, पुनः प्रसङ्गविज्ञानादिति भावः । तथाच णलि आत्त्वे कृते संप्रसारणे पररूपे हु इत्यस्य द्वित्वे ' कुहोश्चुः ' इति चुत्वे तस्य जश्त्वे ' अचो ञ्णिति ' इति वृद्धौ अवादेशे परिनिष्ठितं रूपमाह—**जुहावेति** । **जुहुवतुरिति** । अतुसि आत्त्वे आल्लोपं बाधित्वा अन्तरङ्गत्वात् ' अभ्यस्तस्य च ' इत्यनेन संप्रसारणे ' वार्णादाङ्गं बलीयः ' इत्यस्यानित्यतया अन्तरङ्गत्वात्पूर्वरूपे कृते द्वित्वे उवङिति भावः । यद्यपि किति ' वचिस्वपि ' इति संप्रसारणेऽपि सिद्धमिदम् । तथापि अकिति आवश्यकमभ्यस्तस्य चेत्येतत् न्याय्यत्वादिहापि भवतीति बोध्यम् ।

---

1 आकारणम् आह्वान मित्यर्थः ।

**सिचिकश्च** । ३ । १ । ५३ ॥ एभ्यश्च्लेरङ् स्यात् । (२४१९) **आत्मनेपदे-ष्वन्यतरस्याम्** । ३ । १ । ५४ ॥ 'आतो लोपः—' (सू २३७२) । अह्वत अह्वताम् अह्वन् । अह्वत । अह्वास्त ।

अथ द्वौ परस्मैपदिनौ । वद १००९ व्यक्तायां वाचि । अच्छ वदति । उवाद ऊदतुः । उवदिथ । वदिता । उद्यात् । 'वदव्रज—' ( सू २२६७ ) इति वृद्धिः । अवादीत् । टुओ श्वि १०१० गतिवृद्ध्योः । श्वयति । (२४२०) **विभाषा**

---

एवं जुहुवुः । भारद्वाजनियमात्थलि वेट् । तदाह—**जुहोथ जुहविथेति** । जुहु-वथुः जुहुव । जुहाव-जुहव जुहुविव जुहुविम । क्रादिनियमादिट् । जुहुवे जुहुवाते जुहुविरे । जुहुविषे जुहुवाथे जुहुविध्वे । जुहुवे जुहुविवहे जुहुविमहे ।

**ह्वातेति** । तासि आत्वम् । ह्वास्यति ह्वास्यते । ह्वयतु ह्वयताम् । अह्वयत् अह्वयत । ह्वयेत् ह्वयेत । **हूयादिति** । आशीर्लिङि आत्वे यासुटि कित्त्वात् ' वचिस्वपि ' इति संप्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । **ह्वासीष्टेति** । आशीर्लिङि सीयुटि रूपम् । लुङि विशेषमाह—**लिपिसिचि** । लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्ति-ख्यातिभ्यः' इत्यतः अङिति चानुवर्तते । तदाह—**एभ्य इति** । इदं परस्मैपद-विषयम्, आत्मनेपदे विकल्पविधानात् । वदाद—**आत्मनेपदेषु** । **आतो लोपः इति** । अह्वा अ त् इति स्थिते 'आतो लोप इटि च' इत्यालोप इत्यर्थः । **अह्वदिति** । अह्वताम् । **अह्वन्नित्यादि** । **अह्वतेति** । लुङि आत्मनेपदे अङि रूपम् । अह्वेताम् अह्वन्तेत्यादि । अङभावपक्षे त्वाह—**अह्वास्तेति** । अह्वासाताम् अह्वासत इत्यादि । अह्वास्यत् अह्वास्यत ।

**वद व्यक्तायां वाचीति** । अज्झल्विभागेन स्पष्टोच्चारणे इत्यर्थः । सेडयम् । **अच्छ वदतीति** । अच्छेत्यव्ययमाभिमुख्ये । अभिमुखं वदतीत्यर्थः 'अच्छ गत्यर्थवदेषु' इति गतित्वादच्छेत्यस्य धातोः प्रागेव प्रयोग इति भावः । अकिति लिटि द्वित्वे ' लिट्यभ्यासस्य ' इति संप्रसारणमिति मत्वा आह—**उवादेति** । किति लिटि तु 'वचिस्वपियजादीनाम्' इति द्वित्वात्प्राक् संप्रसारणे कृते द्वित्वे सवर्णदीर्घ इति मत्वाह—**ऊदतुरिति** । **उवदिथेति** । द्वित्वे अभ्यासस्य संप्र-सारणमिति भावः । ऊदथुः ऊद । उवाद-उवद ऊदिव ऊदिम । **वदितेति** । तासि इट् । वदिष्यति । वदतु । अवदत् । वदेत् । **उद्यादिति** । आशीर्लिङि यासुटः कित्त्वात् 'वचिस्वपि' इति संप्रसारणमिति भावः । अवादीत् इत्यत्र हलन्त-लक्षणवृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः' इति वृद्धिविकल्पमाशङ्क्य वद-धातोः पृथक् ग्रहणाद्वृद्धिरित्यभिप्रेत्याह—**वदव्रजेति वृद्धिरिति** । एतदर्थमेव

---

१ अत्र वृद्धिः शोथनिमित्ता, नान्यनिमित्ता विवक्षिता ।

श्वेः । ६ । १ । ३० ॥ श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव शुशुवतुः । 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' ( वा ३४६२ )। तेन 'लिट्यभ्यासस्य—' (सू २४०८) इति संप्रसारणं न । शिश्वाय शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । 'जृस्तम्भु—' ( सू २२६१ ) इत्यङ् वा । (२४२१) **श्वयतेरः । ७ । ४ । १८ ॥** श्वयतेरिकारस्याकारः स्यादङि । पररूपम् । अश्वत् अश्वताम् अश्वन् । 'विभाषा धेट्श्व्योः' ( सू २३७५ ) इति चङ् । इयङ् । अशिश्वियत् । 'ह्म्यन्त-'(सू२२९९) इति न वृद्धिः। अश्वयीत् । वृत् । यजादयो

---

'वदव्रजहलन्तस्य' इत्यत्र वदधातोः पृथक् ग्रहणमिति भावः ।

**टु ओ श्वि इति** । टुरोकारश्चेत् । **श्वयतीति** । शपि गुणायादेशौ । लिटि तु अकिति णलादौ 'लिट्यभ्यासस्य' इत्यभ्यासस्य नित्यं संप्रसारणे प्राप्ते किति तु अतुसादौ द्वित्वात्प्राक् 'वचिस्वपि' इति नित्यं संप्रसारणे प्राप्ते आह—**विभाषा श्वेः । संप्रसारणमिति** । 'ष्यङः संप्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । **लिटि यङि चेति** । 'लिड्यङोः' इत्यनुवृत्तेरिति भावः । **शुशावेति** । णलि अभ्याससंप्रसारणं बाधित्वा द्वित्वात्प्रागेव परत्वादनेन संप्रसारणे कृते ततो द्वित्वे वृद्ध्यावादेशाविति भावः । अकित्त्वाद्वचिस्वपीत्यस्य नात्र प्राप्तिः । तथाच लिट्यकित्स्वेकवचनेषु द्वित्वात् प्रागप्राप्तस्य संप्रसारणस्य विकल्पविधिः । शुशुवतुरित्यादिद्विवचनबहुवचनेषु तु द्वित्वात्प्राक् वचिस्वपीति प्राप्तस्य संप्रसारणस्य विकल्पविधिः । तथाच । उभयत्र विभाषेयम् । यङंशे त्वप्राप्तविभाषैवेयम्—शोशूयते । शेश्वीयते । तत्र णलि एतत्संप्रसारणाभावपक्षे श्वि इत्यस्य द्वित्वानन्तरमभ्याससंप्रसारणे शुश्वाय इति प्राप्ते आह—**श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति** । लिट्यभ्याससंप्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तथाच श्वि इत्यभ्यासस्य संप्रसारणाभावादभ्यासे इकार एव श्रूयते इत्याह—**तेनेति** । **शूयादिति**। आशीर्लिङि यासुटः कित्त्वाद्वचिस्वपीति संप्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः।

लुङि विशेषमाह—**जृस्तम्भ्विति** । तथाच अश्वि अ त् इति स्थिते इयङि प्राप्ते—**श्वयतेरः**। श्वयतेः अः इति च्छेदः। श्वयतेरिति श्तिपा निर्देशः । श्विधातोरित्यर्थः । 'अलोऽन्त्यस्य' इत्यन्त्यस्य इकारस्येति लभ्यते । 'ऋदृशोऽङि' इत्यतः अङीत्यनुवर्तते । तदाह—**श्वयतेरिकारस्येति** । अश्व अ त् इति स्थिते सवर्णदीर्घमाशङ्क्याह—**पररूपमिति** । आर्धधातुकोपदेशे अदन्तत्वाभावात् न अल्लोपः। **अश्वन्निति** । अश्वः अश्वतम् अश्वत । अश्वम् अश्वाव अश्वाम । अङभावपक्षे त्वाह—**विभाषेति । इयङिति** । 'चङि' इति द्वित्वमित्यपि ज्ञेयम् । तदाह—**अशिश्वियदिति** । अङ्श्चङ्श्चाभावे तु अश्वि ईत् इति स्थिते इकारस्य सिचि वृद्धौ सत्यां आयादेशे अश्वायीदिति प्राप्ते आह—**ह्म्यन्तेति न वृद्धिरिति** । श्विग्रहणादिति भावः । न च 'नेटि' इत्येव सिचि वृद्धेः निषेधसिद्धेः पृथक् श्विग्रहणं व्यर्थमि-

वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसंग्रहः । इति भ्वादयः ।
**(२४२२) ऋतेरीयङ्** । ३ । १ । २९ ॥ ऋतिः सौत्रस्तस्मादीयङ् स्यात्स्वार्थे । जुगुप्सायामयं धातुः इति बहवः । कृपायां च इत्येके । 'सनाद्यन्ताः—' ( सू २३०४ ) इति धातुत्वम् । ऋतीयते । ऋतीयांचक्रे । आर्धधातुकविवक्षायां तु 'आयादय आर्धधातुके वा' ( सू २३०५ ) इतीयङभावे 'शेषात्कर्तरि—' ( सू २१५९ ) इति परस्मैपदम् । आनर्त । अर्तिष्यति । आर्तीत् ।

॥ इति तिङन्ते भ्वादिप्रकरणम् ॥

---

ति वाच्यम्, 'नेटि' इति निषेधस्य हलन्तलक्षणवृद्धिमात्रविषयत्वात् । नच श्वि ईत् इति स्थिते सिचि वृद्ध्यपेक्षया परत्वादन्तरङ्गत्वाच्च इकारस्य गुणे एकारे कृते इगन्तत्वाभावेन सिचि वृद्ध्यप्राप्त्या अयादेशे कृते यान्तत्वादेव हलन्तलक्षणवृद्धेर्निषेधसिद्धेः 'ह्मयन्त' इत्यत्र श्विग्रहणं व्यर्थमिति वाच्यम्, अनवकाशतया अपवादत्वेन गुणं बाधित्वा सिचि वृद्धेः प्राप्तौ तन्निषेधार्थत्वादित्यलम् ।

वृदित्यस्य व्याख्यानम्—**यजादयो वृत्ता इति** । ननु भ्वादयो वृत्ता इति कुतो न व्याख्यायते इत्यत आह—**भ्वादिस्त्वाकृतिगण इति** । **चुलुम्पतीति** । चुलुम्पधातुर्लोपार्थकः, तस्यापि भ्वादिगणे पाठात् शब्विकरणत्वमिति भावः । **इति भ्वादय इति** । नचैवं सति 'अद भक्षणे' इत्यादीनां वक्ष्यमाणानां *धातुत्वं कथमिति शङ्क्यम्, शब्विकरणाः भ्वादयः समाप्ता इत्यर्थात्* । **ऋतेरीयङ्** । ऋतेर्धातुपाठे अदर्शनादाह—**ऋतिः सौत्र इति** । **स्वार्थे इति** । अर्थविशेषस्यानिर्देशादिति भावः । तकारान्तो धातुरयमिका निर्दिष्टो न त्विकारान्तः । इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धे ईयङिति ईकारोच्चारणवैयर्थ्यात् । नच इदन्तत्वे सति ' एरनेकाचः ' इति यण् स्यादिति वाच्यम्, एवमपि ऋतेर्ङ्यः इति ङ्यप्रत्यये कृते ' अकृत्सार्वधातुकयोर्दीर्घः ' इति दीर्घेणैव सिद्धे ईयङ्विधिवैयर्थ्यात् । **एके इति** । अन्ये इत्यर्थः । **ऋतीयते इति** । ईयङोऽदन्तत्वात् शपि पररूपम् । **ऋतीयांचक्रे इति** । ' कास्प्रत्ययात् ' इत्याम् । ऋतीयिता । ऋतीयिष्यते । ऋतीयताम् । आर्तीयत । ऋतीयेत । ऋतीयिषीष्ट । आर्तीयिष्ट । आर्तीयिष्यत । **आनर्तेति** । ऋत् इति तकारान्तात् लिटि णलि द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे ' अत आदेः ' इत्यभ्यासस्य दीर्घे ' तस्मान्नुड्द्विहलः ' इति नुट्, नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यत इत्युक्तेरिति भावः । आनृततुः आनृतुः । अनिट्सु *अस्यापाठात् थलि नित्यमिट्* । आनर्तिथ आनृतथुः आनृत । आनर्त आनृतिव आनृतिम । अर्तिता । अर्तिष्यति । ऋत्यात् । **आर्तीदिति** । ' इट ईटि ' इति सिज्लोपः आडागमः । आर्तिष्यत् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां शब्विकरणनिरूपणं समाप्तम् ।

---

१ ऋतीय धातोः शब् विकरणकत्वा दत्रैवास्योपन्यासः ।

# अथ तिङन्तेऽदादिप्रकरणम् ॥ २ ॥

अद १०११ भक्षणे । द्वौ परस्मैपदिनौ । (२४२३) **अदिप्रभृतिभ्यः शपः । २ । ४ । ७२ ॥** लुक्स्यात् । अत्ति अत्तः अदन्ति । (२४२४) **लिट्यन्यतरस्याम् । २ । ४ । ४० ॥** अदो घस्लृ वा स्याल्लिटि । जघास । 'गमहन–' ( सू २३६३ ) इत्युपधालोपः । तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम् । 'शासिवसि—' ( सू २४१० ) इति षत्वम् । जक्षतुः जक्षुः । घसेस्तासावभावात्थलि नित्यमिट् । जघसिथ । आद आदतुः । 'इडत्यर्ति—' ( सू २३८४ ) इति नित्यमिट् । आदिथ । अत्ता । अत्स्यति । (२४२५) **हुझल्भ्यो हेर्धिः । ६ । २ । १०१ ॥** होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि–अत्तात् ।

---

अथ लुग्विकरणान् धातून्निरूपयितुमुपक्रमते—**अद भक्षणे इति** । अनिडयम् । **अदिप्रभृतिभ्यः** । 'ण्यक्षत्रियार्षञितः' इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**लुक् स्यादिति** । अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम् । **अत्तीति** । शपो लुकि दस्य चर्त्वेन तकारः । एवमत्त इत्यपि । **अदन्तीति** । एतदर्थमेव 'झोऽन्तः' इत्यत्र अकारादिरादेश आश्रितः । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । **लिट्यन्यतरस्याम्** । 'अदो जग्धिः' इत्यतः अद इति 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते । तदाह—**अद इति** । आदेशे लृकार इत् । घसादेशः अनिट् । **जघासेति** । अकित्त्वात् 'गमहन' इत्युपधालोपो नेति भावः । जघस् अतुसिति स्थिते आह—**गमहनेत्युपधालोप इति** । 'असंयोगात्' इति कित्त्वादिति भावः । जघ्स् अतुसिति स्थिते घकारस्य चर्त्वं वक्ष्यन् उपधालोपस्य स्थानिवत्त्वमाशङ्क्याह—**तस्येति** । उपधालोपस्येत्यर्थः । जघ्स् अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादाह—**शासीति** । थलि तु क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इति निषेधस्य तासौ नित्यानिड्विषयत्वात् । घस् तु तासौ न विद्यत एव, कुतस्तस्य तासावनिट्कत्वम् । 'यस्तासावस्ति अनिट् च' इति हि भाष्यम् । तदाह—**घसेस्तासाविति । जघसिथेति** । जक्षथुः जक्ष । जघास–जघस जक्षिव जक्षिम । घसादेशाभावपक्षे त्वाह—**आदेति** । थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह—**इडत्यर्तीति । आदिथेति** । आदथुः आद । आद आदिव आदिम ।

अत्ता । **अत्स्यतीति** । अनिट् । दस्य तः । अत्तु–अत्तात् अत्ताम् अदन्तु । अद् हि इति स्थिते 'झयो होऽन्यतरस्याम्' इति हकारस्य पूर्वसवर्णविकल्पेन धकारविकल्पे प्राप्ते—**हुझल्भ्यो हेर्धिः । झलन्तेभ्य इति** । अङ्गविशेषण-

अदानि। **(२४२६) अदः सर्वेषाम्** ।७।३।१००॥ अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात्सर्वमतेन। आदत् आत्ताम् आदन्। आदः आत्तम् आत्त। आदम् आद्व आद्म। अद्यात् अद्याताम् अद्युः। अद्यास्ताम् अद्यासुः। **(२४२७) लुङ्सनोर्घस्लृ** ।२।४।३७॥ अदो घस्लृ स्याल्लुङि सनि च। लृदित्वादङ्। अघसत्। हन १०१२ हिंसागत्योः। प्रणिहन्ति। **(२४२८) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** ।६।४।३७॥ अनुनासिक इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम्। अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे। यमिरमिनमिगमिहनिमन्यतयो-

त्वात् तदन्तविधिरिति भावः। अनेकाल्त्वात् सर्वादेशः। रुदिहीत्यत्र तु न, निर्दिश्यमानस्येरिटा व्यवहितत्वात् इट्सहितस्य त्वनिर्दिश्यमानत्वादिति[1] भाष्ये स्पष्टम्। **अत्तादिति**। धित्वात् परत्वात्तातङ्। तस्य स्थानिवत्त्वेन ङित्वेऽपि न पुनर्धित्वम् 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायात्। अत्तम् अत्त। **अदानीति**। 'आडुत्तमस्य' इत्याडागमः। एतदर्थमेव आडागमे दीर्घोच्चारणमिति भावः। अदाव अदाम। लङि आद् त् इति स्थिते—**अदः सर्वेषाम्**। अद इति पञ्चमी। 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येति लभ्यते। 'गुणोऽपृक्ते' इत्यतः अपृक्ते इति 'तुरुस्तुशम्यमः' इत्यतः सार्वधातुके इति चानुवर्तते। सप्तमीद्वयं च षष्ठ्या विपरिणम्यते। 'अड् गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते। गार्ग्यगालवयोरित्यस्यानुवृत्तिनिवृत्तये सर्वेषामिति। तदाह—**अदः परस्येत्यादिना**। टित्त्वादाद्यवयवः। तदाह—**आददिति**। **आत्तामिति**। अपृक्तग्रहणान्नाडागम इति भावः। विधिलिङि रूपमाह—**अद्यादिति**। शपो लुकि अतः परत्वाभावात् 'अतो येयः' इति नेति भावः। मिपः अमि यासुटि सलोपे सवर्णदीर्घे अद्याम्। अद्याव अद्याम। आशीर्लिङि अद्यादिति सिद्धवत्कृत्याह—**अद्यास्तामिति**। लुङि अद् स् त् इति स्थिते—**लुङ्सनोर्घस्लृ**। 'अदो जग्धिः' इत्यतः अद इत्यनुवर्तते। तदाह--**अद इति**। लृदित्त्वस्य प्रयोजनमाह--**लृदित्त्वादिति**।

हनधातुरनिट्। **प्रणिहन्तीति**। शपो लुक्। नस्यानुस्वारपरसवर्णौ। 'नेर्गद' इति णत्वम्। **अनुदात्तोपदेश**। ऊदृदन्तैरित्यादिभिः संगृहीता अनुदात्तोपदेशाः, वनतिर्भौवादिकः, तनोत्यादयस्तु 'तनु विस्तारे' इत्यादिना पठिष्यन्ते। एतेषामनुनासिकस्य लोपः स्यात् झलादौ क्ङिति इति प्रतीयमानार्थः। एवं सति मुक्तमित्यादौ मुचादीनामपि मकारादिलोपः स्यात्। तत्राह—**अनुनासिक इति लुप्तषष्ठीकं पदमिति**। एवमप्युक्तातिप्रसङ्गतादवस्थ्यादाह--**वनतीतरेषां विशेषणमिति**। अनुदात्तोपदेशानां तनोत्यादीनां चेत्यर्थः। तथाच विशेषणत्वा-

१ आगमविशिष्टे निर्दिश्यमानत्वं नास्तीति सिद्धान्तात्।

ऽनुदात्तोपदेशाः। तनु [ षणु ] क्षणुक्षिणुऋणुतृणुघृणुवनुमनु तनोत्यादयः। हतः घ्नन्ति। (२४२९) **वमोर्वा।** ८। ४। २३॥ उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः। प्रहण्मि-प्रहन्मि प्रहण्वः-प्रहन्वः। 'हो हन्तेः—' सू ३५८ इति कुत्वम्। जघान जघ्नतुः जघ्नुः। (२४३०) **अभ्यासाच्च।** ७। ३। ५५॥ अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ-जघन्थ। हन्ता। 'ऋद्धनोः—' ( सू १३६६ ) इतीट्। हनिष्यति। हन्तु-

---

त्तदन्तविधौ अनुनासिकान्तानामनुदात्तोपदेशानां तनोत्यादीनां वनतेश्चेत्येषामन्तस्य लोपः स्यादित्यर्थलाभान्मुक्कमित्यादौ नातिप्रसङ्गः। तदाह—**अनुनासिकान्तानामित्यादिना।** वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम्, अव्यभिचारादिति भावः। अत्रानुदात्तोपदेशान् अनुनासिकान्तान् दर्शयति—**यमिरमीति।** अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः। अथ तनोतीत्यादीननुनासिकान्तान् दर्शयति—**तनुक्षणुक्षिणिवति।** मनु इत्यन्तं समाहारद्वन्द्वात् प्रथमैकवचनान्तम्। एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः। 'तनु विस्तारे' इत्यारभ्य 'डु कृञ् करणे' इत्यन्ता दश धातवस्तनोत्यादयः। तत्र करोतिरनुनासिकान्तत्वाभावादिह न गृह्यते। 'जनसनखनां सञ्झलोः' इति सनोतेरात्त्वस्य वक्ष्यमाणत्वात् सोऽप्यत्र न गृहीतः। 'वनु याचने' इति तनादौ पठितम्। तस्य उविकरणतया उदित्त्वेन च वनतिग्रहणेनाग्रहणात् तनादौ पठितस्यापि पृथग्ग्रहणम्। तत्र तत्र तानादिकस्य वनेरुदित्त्वात् 'उदितो वा' इति क्त्वायामिड्विकल्पात् 'यस्य विभाषा' इति निष्ठायामिडभावे वतः वतवान् इत्युदाहरणम्। वनतेस्तु भौवादिकस्य उदित्त्वाभावान्निष्ठायां सेट्कत्वेऽपि क्तिनि वतिरित्युदाहरणम्, तत्र 'तितुत्रतथसिसुसरकसेषु च' इति इण्निषेधादित्यलम्।

**हत इति।** तसि अनुदात्तोपदेशानुनासिकान्तत्वान्नकारलोपः, 'सार्वधातुकमपित्' इति तसो ङित्त्वात्। **घ्नन्तीति।** अजादिङित्परकत्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वेन हस्य घः। हंसि हथः हथ। **वमोर्वा।** 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते। 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते। 'हन्तेरत्पूर्वस्य' इत्यतो हन्तेरिति। तदाह—**उपसर्गस्थान्निमित्तादिति।** णलि जहानेति स्थिते आह-**हो हन्तेरिति।** 'अभ्यासाच्च' इत्यपेक्षया अस्यान्तरङ्गत्वेन न्याय्यत्वादिति भावः। **जघ्नतुरिति।** 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम्। थलि भारद्वाजनियमादिड्विकल्पे जहनिथ जहन्थ, इति स्थिते ञ्णित्प्रत्ययपरत्वाभावान्नकारपरत्वाभावाच्च 'हो हन्तेः' इति कुत्वाप्राप्तौ—**अभ्यासाच्च।** 'हो हन्तेः' इत्यनुवर्तते। 'चजोः कु घिण्ण्यतोः' इत्यतः कुग्रहणं च। तदाह—**अभ्यासात् परस्येत्यादिना। जघनिथ जघन्थेति।** इडभावे नस्यानुस्वारपरसवर्णौ। जघ्नथुः जघ्न। जघान-जघन जघ्निव जघ्निम। लुटि स्ये इण्निषेधमाशङ्क्याह—

हतात् घ्नन्तु। (२४३१) हन्तेर्जः। ६।४।३६॥ हौ परे। आभीयतया अस्यासिद्धत्वाद्धेर्न लुक्। जहि। हनानि हनाव हनाम। अहन् अहताम् अघ्नन्। अहनम्। (२४३२) आर्धधातुके। २।४।३५॥ इत्यधिकृत्य। (२४३३) **हनो वध लिङि**। २।४।४२॥ (२४३४) **लुङि च**। २।४।४३॥ वधादेशोऽदन्तः। 'आर्धधातुके' (सू २३०७) इति विषयसप्तमी। तेनार्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः–' (सू २३०८)। वध्यात् वध्यास्ताम्। आर्धधातुके किम्। विध्यादौ हन्यात्। 'हन्तेः–' (सू ३५६) इति णत्वम्। प्रहण्यात्। अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादेः–(सू २२८४) इति न वृद्धिः अवधीत्।

अथ चत्वारः स्वरितेतः। द्विष १०१३ अप्रीतौ। द्वेष्टि द्विष्टे। द्वेष्टा।

---

**ऋद्धनोरिति**। हन् हि इति स्थिते 'हुझल्भ्यः' इति धित्वे प्राप्ते—**हन्तेर्जः**। 'शा हौ' इत्यतः हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—**हौ परे इति**। कृते जादेशे 'अतो हेः' इति हेर्लुकमाशङ्क्य आह—**आभीयतयेति**। **जहीति**। हतात् हतम् हत। **हनानीति**। आटः पित्त्वेन ङित्त्वाभावान्नोपधालोप इति भावः। **अहन्निति**। लङ्स्तिपि, इतश्च' इति इकारलोपे 'संयोगान्तस्य' इति तकारलोपः। न्यो[1]ऽयत्वाद्धल्ङ्याद्लिोपो वा। **अहनमिति**। अहन्व अहन्म। झलादिपरकत्वाभावान्नोपधादीर्घः। विधिलिङि हन्यात् हन्यताम् इत्यादि।

आशीर्लिङि वधादेशं वक्ष्यन्नाह—**आर्धधातुके**। **इत्यधिकृत्येति**। 'अदो जग्धिः' इत्यादिविधयो वक्ष्यन्त इति शेषः। तदधिकारस्थं सूत्रमाह—**हनो वध**। वधेति लुप्तप्रथमाकम्। हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः। **लुङि च**। हनो वधादेशः स्यात् लुङीत्यर्थः स्पष्टः। **वधादेशोऽदन्त इति**। धकारादकारो न सुखोच्चारणार्थ इति भावः। तत्प्रयोजनं तु अनुपदमेव अवधीत् इत्यत्र वक्ष्यते। ननु आशीर्लिङि हन् यादिति स्थिते आर्धधातुके परे कृतस्य वधादेशस्य आर्धधातुकोपदेशे अकारान्तत्वाभावात् कथं वध्यादित्यत्र अल्लोप इत्यत आह—**विषयसप्तमीति**। तथाच आर्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव वधादेशे कृते आर्धधातुकप्रवृत्तिरिति फलितम्। ततश्च आर्धधातुकोपदेशे वधादेशस्य अकारान्तत्वादल्लोपो निर्बाधः। तदाह—**तेनेति**। **अवधीदिति**। सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशे अनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाभावात् सिच इट्। 'अतो हलादेः' इति वृद्धिस्तु न भवति, 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वात्। एतदर्थमेव हि वधादेशस्य अदन्तत्वमाश्रितम्।

**स्वरितेतः इति**। उभयपदिन इति फलितम्। **द्विष अप्रीताविति**। अनिट्। **द्वेष्टीति**। पित्त्वेन ङित्त्वाभावाल्लघूपधगुण इति भावः। द्विष्टः द्विषन्ति।

---

[1] संयोगान्त लोपस्यासिद्धत्वाद्धल्ङ्यादिलोप एव।

